हृदयं यदि वा विदीर्य्यते
मम मौनं शरणं न चान्यथा ॥३४॥

(ततः प्रविशति होरास्यो मृषालास्यो वर्णाद्रिश्च ।)

**होरास्यः**—स्वागतं ते महाभाग ।

**हेमलेखः**—त्वां कुशलिनं दृष्ट्वाहं प्रीतोऽस्मि । ननु होरास्योऽसि त्वम् । अथवात्मानमेव विस्मरामि ।

**होरास्यः**—देव । स एव । तव च चिरं विधेयः ।

**हेमलेखः**—आर्य्य । प्रियसख । अहं खलु त्वया सह सखेति नामविनिमयं करिष्ये । होरास्य । किमिति विटेन्द्रवर्गादागतोऽसि । अथ मृषालास्य ।

**मृषालास्यः**—भद्र देव ।

**हेमलेखः**—त्वां दृष्ट्वाहं भृशं प्रीतोऽस्मि । आर्य्य । स्वपराह्णस्ते । कुतो नामासि विटेन्द्रवर्गादिहायातः ।[1]

**होरास्यः**—भद्र देव । कार्य्यविमुखतया ।

**हेमलेखः**—तव शत्रोर्मुखादपि नाहमेतच्छ्रोतुमिच्छामि । न च त्वमात्मविरोधिनीं वार्त्तां श्रावयितुं रभसान्मम श्रुतिं वाधितुमर्हसि । जाने खलु भवान् न कार्य्यविमुख इति । अथालस्यनीडेऽस्मिन् कस्ते वृत्तान्तः । इतः खलु त्वं यावन्न प्रतिनिवर्त्तसे तावद्वयं त्वां भूरिपानं शिक्षयिष्यामः ।

**होरास्यः**—देव । भवत्पितुः शेषकृत्यं द्रष्टुमिहागतवानस्मि ।

**हेमलेखः**—भोः सहाध्यायिन् । न मामुपहसितुमर्हसि । अहन्तु मन्ये मम मातुर्विवाहोत्सवं द्रष्टुमिति ।

**होरास्यः**—देव । स हि तदनुपदमेव समवर्त्तत ।

**हेमलेखः**—होरास्य ।

स्वल्पव्ययेन किल ते हि चिताग्निपक्वैः[2]
सन्तर्पिताः परिणये सुलभैरपूपैः ।

---

१. एतद् वाक्यं होरास्यमुद्दिश्येति बोध्यम् ।

२. चिताग्निना पक्वैः । समाधिव्यवस्थायां कुतश्चिताग्निरिति प्रश्ने तु चितायां रचितायां पाकार्थं योऽग्निस्तेन पक्वैरिति बोध्यम् ।

तं वैरिणं वरममुत्र लभेय दृप्तं
नैनं तथापि दिवसन्तु विलोकयेयम् ।।३५।।

होरास्य । अथायं मे तातः । मन्ये खलु तातं मे पश्यामीति ।

**होरास्यः**—देव । कुत्र ।

**हेमलेखः**—होरास्य । मनसि ।

**होरास्यः**—तं खल्वहमेकदा दृष्टवानस्मि । स हि शोभनो राजासीत् ।

**हेमलेखः**—स हि पुरुष आसीत् । यथा तथा वा स मन्तव्यो नाहं तस्य सदृशं लोके द्रक्ष्यामि ।

**होरास्यः**—देव । मन्ये ह्यः किल रात्रावहं तं दृष्टवानस्मि ।

**हेमलेखः**—दृष्टवानसि कम् ।

**होरास्यः**—देव । तव पितरं नो राजानम् ।

**हेमलेखः**—किं पितरं मे राजानम् ।

**होरास्यः**—क्षणं सखे शान्तकुतूहलस्त्वं
वार्त्तां मयोक्तां शृणु सावधानम् ।
आश्चर्य्यवद्द् विप्रतिलीनमाभ्यां
मयापि दृष्टं कथयामि तुभ्यम् ।।३६।।

**हेमलेखः**—देवप्रसादाय खलु मां श्रावयितुमर्हसि ।

**होरास्यः**—इमौ हि भद्रमुखौ वर्णार्द्रमृपालास्यौ स्तब्धयामे निशीथे रात्रिद्वयमारक्षाविधौ यावत् समं नियुक्तौ तावत् तत् सत्त्वमाविरासीत् । त्रिः[१] किल यामिन्याम्—

पादाङ्गुष्ठशिखावधि प्रतिचरन् सर्वायुधैः शोभितः
सख्योर्मे पुरतः स धीरमगमत् तुल्याकृतिस्त्वत्पितुः ।
दण्डाग्रव्यवधानरक्षमनयोर्भीत्या चलन्नेत्रयोः
संस्तब्धेन्द्रिययोश्च केवलमतो मौनं तदा रक्षतोः ।।३७।।

एतच्च वृत्तान्तमिमौ मेऽत्यन्तनिभृतं कथितवन्तौ । अथाहमपि यावत् तृतीयां यामिनीमाभ्यां सह रक्षाकार्ये नियुक्तस्तावत् तत् सत्त्वमुक्त-

१. अगमदित्यन्वयः ।

प्रकारेण यथाकालं यथारूपञ्च भूयोऽप्याविरासीत् । वयं खलु दृष्टवन्तस्ते पितरम् । एतौ हि हस्तौ न तथान्योऽन्यसदृशौ यथा स च स च बभूवतुः ।

**हेमलेखः**—क्व नु खल्विदमासीत् ।

**मृषालास्यः**—देव । अस्माकमारक्षामञ्चस्योपरि ।

**हेमलेखः**—कच्चित् तं पृष्टवानसि त्वम् ।

**होरास्यः**—देव । तं खल्वहं पृष्टवानस्मि । स तु न किञ्चित् प्रतिवचनं ददौ । तथापि मन्येऽसौ किल सकृत् शिर उन्नमय्य स्फुरितोत्तराधरो वक्तुं प्रक्रममाण इवासीत् । तस्मिन्नेव क्षणे प्रभातकुक्कुट उच्चै रुराव । तदारावश्रवणाच्चासौ विशीर्य्यमाणो द्रुतमदर्शनं गतः ।

**हेमलेखः**—तत् खलु महच्चित्रमिव प्रतिभाति ।

**होरास्यः**—महाभाग । प्राणैरपि शप एष खलु भूतार्थः[1] एव । ततोऽस्माभिश्चिन्तितमेतद्वृत्तमवश्यं ते निवेदयितव्यमिति ।

**हेमलेखः**—उपपन्नम् । उपपन्नम् । आर्य्याः । एतत्त्वायासयति माम् । अथाद्य रजन्यां रक्षाविधिर्वः पालयितव्यः[2] ।

**वर्णार्द्रमृषालास्यौ**—देव । अथ किम् ।

**हेमलेखः**—सर्वायुधैः शोभित इति वोऽभिहितम् ।

**वर्णार्द्रमृषालास्यौ**—देव । सर्वायुधैः शोभितः ।

**हेमलेखः**—आमूर्द्धचरणम् ।

**वर्णार्द्रमृषालास्यौ**—आशिरःपादम् ।

**हेमलेखः**—तस्य मुखन्तु न दृष्टवन्तो यूयम् ।

**होरास्यः**—देव । ननु दृष्टवन्तः । स हि शिरस्त्राणस्याधोभागमुन्निनाय ।

**हेमलेखः**—किमसौ भ्रूभङ्गभीषणमैक्षत ।

**होरास्यः**—न तथा रुषा यथा शुचा विकृतमुखमैक्षत ।

**हेमलेखः**—किं विवर्णमुखमुत रक्तमुखम् ।

**होरास्यः**—नहि । अतीव विवर्णमुखम् ।

**हेमलेखः**—युष्मासु च दृष्टिं निदधे ।

**होरास्यः**—अत्यन्तमेव स्थिरम् ।

**हेमलेखः**—यद्यहमपि नाम तत्र भवेयम् ।

---

१. भूतस्य प्रेतस्यार्थो विषय इति च ।

२. इति काकुः ।

**होरास्यः**—स च नूनं ते महान्तं विस्मयमादधीत ।
**हेमलेखः**—सम्भावितम् । सम्भावितम् । किमसौ चिरं तस्थौ ।
**होरास्यः**—यावत् कश्चिद् नातिद्रुतं किल शतं गणयेत् ।
**वर्णार्द्र मृषालास्यौ**—दीर्घतरम् । दीर्घतरम् ।
**होरास्यः**—न खलु यदाहं प्रेक्षे ।
**हेमलेखः**—किमस्य श्मश्रु पाण्डुरमासीत् । न खलु ।
**होरास्यः**—तत्तु शबलमासीत् । यथा तस्य जीवतोऽपश्यम् ।

**हेमलेखः**— **अद्यैव खलु यामिन्यामारक्षां पालयाम्यहम् ।**
**एवञ्च यदि नामासौ भूयोऽप्याविर्भवेदिति ॥३८॥**

**होरास्यः**—निश्चयं ब्रवीमि सोऽद्याविर्भविष्यतीति ।

**हेमलेखः**—**तुल्याकृतिर्मम पितुर्यदि तावदेष**
**प्रेष्ठस्य तस्य पुनरेव भवेन्निरीक्ष्यः ।**
**प्रक्ष्यामि तं नरकवासिभिरप्युदीर्णैः**
**शान्त्यर्थमस्मि तरसा प्रतिषिद्धवाक्यः ॥३९॥**

तद्भवतोऽहमभ्यर्थये यथा भवद्भिरेष वृत्तान्त एतावन्तं कालं निभृतं रक्षितस्तथातःपरमपि निभृतं रक्षितव्यः। अद्यापि यामिन्यां यत् किलापतेत् तद् बुद्ध्या ग्रहीतुमर्हथ न तु वाचा प्रकाशयितुमिति । भवतां प्रणयं प्रति दास्यामहे वयम् । तदामन्त्रये भवतः । एकादशद्वादश-घण्टावादनान्तरे मञ्चोपरि भवद्भिः सङ्गतो भविष्यामि ।

**सर्वे**—महाभागाय भवते कार्य्यं खलु नो निवेद्यते ।
**हेमलेखः**—भवतां प्रणयः खलु मे निवेद्यतां यथा ममापि प्रणयः खलु वो निवेदितः । आमन्त्रये वः ।

(निष्क्रान्तो होरास्यो मृषालास्यो वर्णार्द्रश्च ।)

**प्राणा मत्पितुरद्य शस्त्रनिहिताः किं साध्विदं मन्यते**
**पापं कर्म हि तत्र किञ्चन भवेद् रात्रिश्च दूरायते ।**
**धैर्य्यं तावदवाप्नुहि क्षणमहो सन्दिग्ध चेतो मम**
**ज्ञायन्ते खलु सर्वलोककरणैः पापानि गुप्तान्यपि ॥४०॥**

(निष्क्रान्तः ।)

इति द्वितीयं दृश्यम् ।

## तृतीयं दृश्यम्

पुरुन्यासस्य गृहस्थः कक्षः।

(ततः प्रविशति लीढास्य उपाला च।)

**लीढास्यः**—ममोपचारास्तावद् नावि समारोपिताः। तदापृच्छे त्वाम्। अथ भगिनि।

**यावद् वातोऽनुकूलस्ते यानञ्चैति सहायताम्।**
**दीर्घसूत्रमपाच्छिद्य लेखं त्वं मे विसर्ज्जय ॥४१॥**

**उपाला**—किमत्र ते संशयः।

**लीढास्यः**—किञ्च।

**नूनं त्वयि प्रेमभराभिधानो**
**यो हेमलेखप्रणयावतारः।**
**आचारमात्रं तमवेहि यूनः**
**कामञ्च लीलायितमुग्रवेगम् ॥४२॥**

**पुष्पञ्च रक्तं नवयौवनस्य**
**व्यग्रं न नित्यं मधुरं न सत्यम्।**
**क्षणोपभोगं गुरुसौरभाढ्य-**
**मेतावता कीर्त्तिततावदन्तम् ॥४३॥**

**उपाला**—किं तावदन्तमेव न ततः परम्।

**लीढास्यः**—ततः परं न भावय। कुतः।

**स्वभावो हि नैक एव वीर्य्यराशिभिरभिवर्द्धते पुंसः।**
**सहैव देहेनासौ तदात्मानमप्यभिवर्द्धयेत् ॥४४॥**

अथवा स खलु त्वय्यधुनाहितभाव एव भवति तद्भावगुणश्च पापेन कैतवदोषेण वा न दूष्यत इति सम्भाव्यत एतत्। तथापि त्वयैतावच्छङ्कनीयम्। महत्त्वेऽपि सति कुलसम्भूत्या तस्यात्मा नात्माधीनः। न खलु

पृथग् जनवत् तेनात्माभिप्राय एवानुवर्त्तनीयः। कृत्स्नस्य राष्ट्रस्यास्य कल्याणं हि तदभिरुचिमपेक्षते। तेन हि राष्ट्रशरीरमतापेक्षया तदधिपतिना तेनात्माभिप्रायो नियमयितव्यः। तेन हि यद्यसौ वदति त्वय्यहं बद्धभाव इति तदा त्वया तावन्मात्रं विमृश्य विश्वसनीयं यावदनेन स्थान-कर्मविशेषतः शक्यं साधयितुम्। तच्च पुनर्दीनार्कस्य प्रकृतिपुरुषाणां मतान्नातिरिक्तमित्यवगन्तव्यम्। ततश्च त्वया विचारणीयं यद्यहमति-विश्वासादस्य प्रणयगीतानि याथार्थ्येन गृह्णीयां मम हृदयं वानेन हृतं स्यात् तर्हि का नाम मम गौरवहानिर्भवेदिति। प्रियभगिनि। उपाले। एतदेव शङ्कनीयम्। तथाहि।

तदेषा शङ्का ते ननु समुचिता वत्सलतया
पुरस्तावद् भावो विलसतु न कामस्तु विषमः।
प्रमुग्धापि प्रायो भवति वनिता भावतरला
स्फुरच्चन्द्रालोकाद् गलितमिव तस्या यदि वपुः ॥४५॥

स्वयमपि खलु धर्मो वाच्यदोषेण दुष्टः
कुसुममुकुलशोभा दंशकैः खण्डिता च।
तरलवयसि सद्यश्चेतसो वेगवत्त्वा-
न्न विषयरसबन्धाद् दुर्लभोऽस्मिन् प्रणाशः ॥४६॥

तेन हि शङ्किता भव। यतः।

आत्मनो रक्षणं प्रायः संशयं समपेक्षते।
केवलं यौवनञ्चैव स्पर्द्धते ध्रुवमात्मना ॥४७॥

**उपाला**—इममुपदिष्टमर्थं नियमविधिमिव हृदयेनादास्ये। अथ भद्र भ्रातः।

श्रेयःपथं तं निशितं दुरत्ययं
धर्मोपदेष्टेव दुराशयो दिशन्।
स्फीतो दुरात्मा ललितेन योषितां
सङ्गेन माद्यन् स्ववचो न लङ्घय ॥४८॥

**लीढास्यः**—अये। अलं मत्कृते शङ्कया। ननु चिरायितं मया। अथैष तात इत एवाभिवर्त्तते।

(ततः प्रविशति पुरुन्यासः ।)

आशिषो द्विगुणीभूता द्विगुणीकुर्वते शिवम् ।
आपृच्छावसरस्तावद् द्वितीयोऽयमुपस्थितः ॥४६॥

**पुरुन्यासः**—लीढास्य । ननु त्वमधुनाप्यत्रैव तिष्ठसि । नावं तावदारोह । नावं तावदारोह । धिक् ।

वायुना किल सज्जा नौस्त्वञ्च सर्वैः प्रतीक्षितः ।
अथाशिषं ममादाय व्रज पुत्रक सिद्धये ॥५०॥

(लीढास्यशिरसि हस्तं निदधाति)

मदुपदेशांश्च कांश्चित् तव हृदयनिहितान् कुरु । तथाहि ।

मनसा चिन्तितं वस्तु वचसा न प्रकाशयेः ।
सहसा चिन्तितञ्चैव कर्मणा न समाचरेः ॥५१॥

अभिगम्यश्च सर्वेषां सर्वलोकेषु सर्वदा ।
अनाधृष्यश्च तैरेव भवेस्त्वं कुलनन्दन ॥५२॥

परीक्ष्य सख्यञ्च समाचरेस्त्वं
कृते तु सख्येऽथ चिराय तिष्ठेः ।
यं कञ्चन प्रीतिरसार्द्रचेताः
सखेति बुद्ध्या न तु मोदयेथाः ॥५३॥

किञ्च ।

कलहाद् भयमस्तु ते परै-
र्बलवच्चेत् कलहं प्रवेशितः ।
धृतिमान् किल सोढुमर्हसि
न परेषां न भवेद् भयं यथा ॥५४॥

श्रुतिञ्च लोकाय दिशेस्त्वमात्मनो
न वाचमिष्टाय तु संमिताक्षराम् ।
अथाभिनन्द्यं वचनीयमन्यतो
मतञ्च तस्मै सहसा न निर्दिशेः ॥५५॥

वित्तवानपि न वेशकौतुका-
च्चित्रवेशमुपकल्पयात्मनः ।
सर्वथा विभवतः सुवेशभृद्
वित्तवान् भव न जातु दुर्मदः ।।५६।।

प्रायेण च लोकेऽस्मिन् वेशेनैव विज्ञायते पुरुषः ।
विशेषात् प्रांशुदेशे तत्र यत्नं दधत्यभिजनाः ।।५७।।

अपि च ।

ऋणं न कुर्य्या यदि वा न दद्या
ऋणं हि मित्रञ्च धनञ्च नाशयेत् ।
ऋणप्रदानग्रहणप्रवृत्ति—
र्मितव्ययाभ्यासमलं प्रतीपयेत् ।।५८।।

इदञ्च सर्वोपरि वर्त्तते ।

नन्वात्मनोऽनुरूपस्त्वं भव सत्यं समाश्रितः ।
तथा च ध्रुवमन्यस्मिन्नसत्यं न चरिष्यसि ।।५९।।

परस्मादपरं भावि नक्तञ्चेद् दिनमन्वियात् ।
आपृच्छे त्वामिदं ज्ञानमाशिषो द्रढयन्तु ते ।।६०।।

**लीढास्यः**—देव । प्रह्वोऽहं भवन्तमामन्त्रये ।

**पुरुन्यासः**—परिहीयते गमनवेला । गच्छ । परिजनश्च त्वां प्रतिपालयति ।

**लीढास्यः**—उपाले । आपृच्छे त्वाम् । अस्मदुक्तं हि सर्वं तद् दृढं मनसि निधातुमर्हसि ।

**उपाला**—सर्वमेतद्धि मम मनसि निहितम् । त्वयि पुनरेतस्य द्वारार्गलं रक्षितं भविष्यति ।

**लीढास्यः**—आपृच्छे । (निष्क्रान्तः ।)

**पुरुन्यासः**—उपाले । किमिव नामासौ तुभ्यमुक्तवान् ।

**उपाला**—प्रसीदतु भवान् । तच्च किञ्चिद् हेमलेखमधिकृत्य मेऽभिहितम् ।

**पुरुन्यासः**—अये । साध्विदमनुस्मारितम् । स किलेदानीं तुभ्यमेकान्तमात्मावसरं ददाति । त्वमप्येनं मुक्तहृदयमात्मसन्दर्शनेन समनुगृह्णासीति मया श्रुतम् । एतच्चानिष्टनिवारणाय मे निवेदितम् । तथा सति त्वमात्मानं न किल पश्यसि यथा मम दुहितृगौरवमात्मनश्च महिमानं रक्षितुमर्हसीत्यहं त्वां ब्रवीमि । कस्तावद् युवयोर्वृत्तान्तः । कथय मे भूतार्थम् ।

**उपाला**—देव । स हि मां सम्प्रति प्रणयसम्भावनाभिर्वर्द्धयामास ।

**पुरुन्यासः**—अहो धिक् । किं प्रणय इति । त्वं हि विषमानभिज्ञा बालेव प्रलपसि । अथ सम्भावना इति च त्वमात्थ । किमासु प्रत्ययं विदधासि ।

**उपाला**—देव । नाहं जाने क्व प्रत्ययो मया विधातव्य इति ।

**पुरुन्यासः**—हन्त । अहं ते कथयामि ।

**अलीकसम्भावनमन्यथैव**
**त्वं मन्यसे बालतया प्रकामम् ।**
**अथात्मसम्भावनया न वत्से**
**मामेव सम्भावय बालमात्रम् ॥६१॥**

अलं तावत् सम्भावनापदस्यार्थातिविस्तरेण ।

**उपाला**—देव । स हि मे भावसमुदाचारैः पदैः प्रणयं निवेदितवान् ।

**पुरुन्यासः**—अये । तमाचारमात्रमिति भण । ततस्ततः ।

**उपाला**—देव । तच्च प्रायेणाखिलैर्दिव्यैः शपथैर्द्रढयामास ।

**पुरुन्यासः**—अये । कन्याबन्धनाभिः कूटवागुराभिरिति विद्धि । कुतः ।

**जानामि मुग्धे नवयौवनस्य**
**पुंसः सरागं हृदयं प्रमथ्य ।**
**कन्यां प्रतीमे शपथा विचित्राः**
**सम्भूय कण्ठाद् बहुलीभवन्ति ॥६२॥**

तेन हि न त्वं वत्से खद्योतविलसितानिमान् प्रणयवादान् भावापेक्षयाधिकोच्छ्वासबहुलांस्तत्कालेऽपि स्तिमितक्षुद्रकान् ज्योतिरिति प्रतिपद्यस्व ।

इतः प्रभृति त्वमस्मिन् किञ्चिद् विरलदर्शना भव। तदभिप्रायलङ्घनाच्चात्मानं दुर्लभप्रार्थनं कुरु। कुमारो हेमलेखो हि तावत् तरुणवयास्त्वदपेक्षयाधिकस्त्रातन्त्र्येण विचरितुमुत्सहते। अलं बहुना। उपाले। न त्वमस्य शपथेषु कमपि नाम प्रत्ययं विदधीथाः। कुतः।

भङ्गुरास्ते तत्कृताः शपथा हि स्वरूपतोऽतद्वर्णाः।
कैतवार्थमित्यवेहि पुण्यरूपा इवापुण्यकाः ॥६३॥

सर्वथा त्वमद्य प्रभृति कुमारेण हेमलेखेन सार्द्धमात्मावसरमन्योऽन्यप्रजल्पितैर्यथा तथा यापयितुं नार्हसीति त्वामहं स्फुटं ब्रवीमि। त्वमितस्तावत्—

पन्थानं प्रतिपद्यस्व समीक्ष्येति ब्रवीमि ते।
उपालाः—नूनं ते शासने देव वर्तिष्येऽहं यथायथम् ॥६४॥

(निष्क्रान्तौ।)

इति तृतीयं दृश्यम्।

## चतुर्थं दृश्यम्

दुर्गस्य पुरतो मञ्चः ।

(ततः प्रविशति हेमलेखो होरास्यो मृषालास्यश्च ।)

**हेमलेखः**—चण्डो वायुर्मम मर्माणि तुदति । बलवच्छैत्यञ्च मां प्रबाधते ।
**होरास्यः**—एष हिमस्तीक्ष्णश्च वायुः प्रवाति ।
**हेमलेखः**—अथ कियती वेला स्यात् ।
**होरास्यः**—मन्ये द्वादशघण्टा न वादिता ।
**मृषालास्यः**—नहि । वादिता ।
**होरास्यः**—कथम् । सा मया न श्रुता । तर्हि प्रायेणायमेव स कालो यदा तत् सत्त्वं विचरति स्म ।

(नेपथ्ये तूर्यनिर्घोषो युद्धास्त्रगर्ज्जितञ्च समुच्चरति ।)

देव । किमिदं नाम ।

**हेमलेखः**—अद्य खलु यामिन्याम्—

**पानोत्सवेन महता नृपतिर्विनिद्रः**
**संमोदते तुमुलताण्डवनृत्यगीतैः ।**
**आसेवते मधु यदग्र्यमशेषधारं**
**तद्द घुष्यते सततमायततूर्यघोषैः ॥६५॥**

**होरास्यः**—किमिहायमाचारः ।
**हेमलेखः**—अये । ननु तथैव । आ जन्मनः खल्वहमत्राभिज्ञः । एष नामाचारो न तथा प्रतिपादितेन यथा लङ्घितेनैव प्रायेणेह सम्भावित इति मे मतम् । अयञ्च नो वृद्धैर्विभ्रान्तिहेतुर्मदः प्राच्यैः प्रतीच्यैश्च बहुधा विगीयते । ते चास्मान् प्रमत्तान् कथयन्ति दूषयन्ति चास्मद्यशः शूकरार्थपदैर्वचोभिः । पश्य ।

**अयमेकोऽपि दोषो नो यशांसि सुमहान्त्यपि ।**
**सारभूतान् गुणांश्चैव तांस्तान् हरति सर्वशः ॥६६॥**

तथाहि प्रायेण पुरुषा दैवाधीनजन्मतया स्वयमस्वतन्त्राः स्वभावदोषेण बुद्धिनियमविलङ्घिनो मदविशेषावेशात् शिष्टाचारविरोधिभिराचारैर्वा गुणसन्निपातेऽपि प्रकृतिशप्ता इव दैवहृता इव पुण्यचारित्र्या अपि लोकातीतगाम्भीर्या अपि लोकेन तद्दोषमात्रेणैव विदूष्यन्ते ।

**होरास्यः**—देवाः ।

**पश्य भूयोऽपि तत्सत्त्वमित एवाभिवर्त्तते ।**

(ततः प्रविशति प्रेतः ।)

**हेमलेखः—देवाः सर्वे प्रसीदन्तु रक्षन्तु नः समागताः ॥६७॥**

अयि भोः ।

**किंवा देवस्त्वमसि शुभदः पापकृद्वान्य एव**
**स्वर्गात् सद्यो व्रजसि यदि वा यातनाघोरधाम्नः ।**
**भावस्ते स्यात् प्रकृतिसुभगो विद्यताञ्चान्यथा वा**
**पृच्छामि त्वां विचरसि कथं हन्त सन्दिग्धरूपः ॥६८॥**

**हेमलेखमहमद्य निश्चयात्**
**त्वां ब्रवीमि किल पूर्वभूपतिम् ।**
**आत्मनश्च पितरं सुतप्रियं**
**कोऽसि तत् कथय मे स्वरूपतः ॥६९॥**

किञ्च कथय—

**कस्मात् तवास्थिनिचयो भुवि रक्षितोऽपि**
**भित्त्वा शवस्य वसनं पुनरुत्थितोऽयम् ।**
**पाषाणवेदिनिलयश्च विभिन्नभित्ति-**
**स्त्वां संस्थितं किमिति भीषणमुज्जगार ॥७०॥**

अहो चित्रम् ।

**मृतोऽपि सर्वायसनद्धगात्रो**
**ज्योत्स्नार्द्धलोके व्रजसि प्रकाशम् ।**
**घोरां त्रियामां विदधत्तथास्मा-**
**नतीन्द्रियार्थेऽत्र विमूढसत्त्वान् ॥७१॥**

कथय त्वं कथं तावदेवंवृत्तः कुतोऽपि वा ।
किंवा वयं करिष्यामः पृच्छया स्मः प्रबाधिताः ॥७२॥

(प्रेतो हेमलेखं निःशब्दमाह्वयति ।)

**होरास्यः**—असौ त्वां रहसि किञ्चिद् वक्तुकाम इवात्मानुगमनाय निःशब्दं त्वामाह्वयति ।

**मृषालास्यः**—पश्य । असावेकान्ते समुपसपणाय त्वामनुनयति । मैनमनुयासीः ।

**होरास्यः**—न हि । कथमपि मैनमनुयासीः ।

**हेमलेखः**—अन्यथासौ न वक्ष्यति । यावदेनमनुगच्छामि ।

**होरास्यः**—देव । मैनमनुयासीः ।

**हेमलेखः**—कुतो न्विदं भयम् ।

भयं न पश्यामि भवेद् भयं यदि
तथापि लोके मम जीवितेन किम् ।
अथात्मवद् योऽमृत एव नान्यथा
तदात्मनो मे किमसौ विघातयेत् ॥७३॥

भूयोऽप्यसौ मामाह्वयनि । यावदेनमनुमच्छामि ।

**होरास्यः**—देव । मा तावत् । यद्यसौ त्वां समुद्राभिमुखमाकर्षति ततः किंभवेत् । अथवा यद्यसौ त्वां समुद्रावेक्षि तुङ्गं कूटाग्रमारोपयति तत्र च भयङ्करं विग्रहान्तरं दधद् बुद्धिप्रणाशपूर्वं भवत उन्मत्ततां जनयति ततः किं भवेद् । चिन्तय तावत् । तथाहि ।

घोरं देशं तमसि पुरतः पश्य ते भासमानं
धत्ते पुंसः किमपि स धृतेर्बुद्धिनाशाद्विघातम् ।
उच्चैःशीर्षो जलनिधिमतिक्रम्य तद्व्योममध्ये
संत्रासञ्च श्रवणविषयैर्गर्ज्जितैरातनोति ॥७४॥

**हेमलेखः**—इदानीमपि मामाह्वयति । गच्छ । अयमहं त्वामनुगच्छामि ।

**मृषालास्यः**—देव । न गन्तव्यम् ।

**हेमलेखः**—हस्तावपसारय ।

**होरास्यः**—मा तावत् । शासने तिष्ठ । न खलु त्वं यास्यसि ।

**हेमलेखः**—क्राउत्यममामन्ति दैवकलिताः प्राणाः कुतोऽप्याकुलाः
सिंहस्येव महाबलस्य च दृढीकुर्व्वन्ति सर्वाः शिराः ।

आहूतोऽस्मि पुनर्विमुञ्चतमलं मां बान्धवौ बन्धनाद्
देवैरेष-शपे न चेत् किमपि वां प्रेतात्मतां द्रक्ष्यथः ॥७५॥

ननु ब्रवीमि । अपेतम् । गच्छ तावत् । एषोऽहं त्वामनुगच्छामि ।

(निष्क्रान्तः प्रेतो हेमलेखश्च ।)

**होरास्यः**—स हि चेतोविकारैर्बलवत् प्रबाध्यते ।
**मृषालास्यः**—तन्मतमेवानुमन्तुं नावयोरुचितम् । यावदेनमनुगच्छावः ।
**होरास्यः**—अन्वग् याहि । कथं नु खल्विदं परिणमेत् ।
**मृषालास्यः**—दीनार्कविषये तावद् यातं किञ्चिद् विशीर्णताम् ।

**होरास्यः**—देवाः साधु विधास्यन्ति ।
**मृषालास्यः**— सोऽनुगन्तव्य एव हि ॥७६॥

(निष्क्रान्तौ ।)

इति चतुर्थं दृश्यम् ।

## पञ्चमं दृश्यम्

मञ्चस्यापरो भागः ।

(ततः प्रविशति प्रेतो हेमलेखश्च ।)

**हेमलेखः**—कथय क्व नु खलु मां नेष्यसि । इतः परं न गच्छामि ।

**प्रेतः**—श्रूयतां भोः ।

**हेमलेखः**—अवहितोऽस्मि ।

**प्रेतः**— कालोऽयमागतप्रायो यावत् कष्टासु निर्भरम् ।
ज्वलद्गन्धकवद्वह्निज्वालासु स्यां तिरोहितः ।।७७।।

**हेमलेखः**—हा हतोऽसि प्रेतक ।

**प्रेतः**—अलं मयि कृपया । यत्तेऽहं विवृणोमि तस्मै तावदवधानं देहि ।

**हेमलेखः**—कथय । श्रोतव्यं खलु मया ।

**प्रेतः**—श्रुत्वा च पापं प्रतिविधेयम् ।

**हेमलेखः**—कथम् ।

**प्रेतः**— पितुः प्रेतस्तेऽहं निशि किल चराम्यस्तमहिमा
दिवा चैवाध्यासे निरयमुपवासेन विहृतः ।
महापापं यत्तच्चरितमघृणं जीवति मयि
न यावद्दीप्ताग्नौ कथमपि भवेद्दग्धमखिलम् ।।७८।।

अपि च ।

गोप्यं स्याद् यदि ते न पापवसतौ प्राज्यं रहस्यं मम
ब्रूयां किञ्चन वृत्तमण्वपि यतो घोरायमानं भवेत् ।
सत्त्वोन्माथनमस्त्रशैत्यकरमुद्वृत्ताक्षितारं तव
शल्यस्येव च लोमहर्षणमलं केशाग्रविश्लेषणम् ।।७९।।

किन्तु ।

माभून्मे परमेतावद् रहस्यख्यापनं त्वयि ।
स्थिते मानुष्यके भावे मांसशोणितलेपने ।।८०।।

श्रूयतां श्रूयतां श्रूयतां भो सम्प्रति । यदि तातस्ते प्रिय आसीत्--

**हेमलेखः**—हा ईश्वर ।

**प्रेतः**—तदा तस्याप्राकृतस्य नीचवयस्य प्रतिकृतमाचर ।

**हेमलेखः**—किं वत्र इति ।

**प्रेतः**—
धर्म्योऽपि किल यो भवेद्वधो वध एव कर्हिचिन्नान्यथा ।
स त्वासीद्विशेषेण नीचोऽप्राकृतश्चित्रश्च ॥८१॥

**हेमलेखः**--ननु वेदय मां क्षिप्रं यथा तस्य प्रतिकृतमाचरेयम् ।
समाधिनाथ चिन्तया प्रणयस्य वाहं सदृशजवः ॥८२॥

**प्रेतः**—दिष्ट्या सदृशसत्त्वं त्वां पश्यामि ।

अत्रापि तावदविलुप्तधृतिर्यदि स्या
भूयिष्ठमेव जडतामनुदर्शयेस्त्वम् ।
नद्यां विभान्ति खलु ये स्मृतिविभ्रमायां[1]
तेषां परो जडतया पृथुशैवलानाम् ॥८३॥

अथेदानीं श्रूयतां हेमलेख ।

कुञ्जे प्रसुप्तं किल मां कदाचिद्
यदृच्छया संदशति स्म सर्पः ।
दीनार्कराज्ये बहुधा प्रजासु
प्रसर्पितोऽयं वितथः प्रवादः ॥८४॥

तद्विद्धि त्वं महासत्त्व पितुस्तव कुमारक ।
सर्पः प्राणापहारी यः सोऽसौ रत्नं दधाति च ॥८५॥

**हेमलेखः**—अहो दूरदर्शित्वं मे हृदयस्य । असौ खलु मे पितृव्यः ।

**प्रेतः**—अये । असावेव भ्रातृदारगाम्यगम्यागमनधृष्टः पापिष्ठपुरुषः ।
यः किल—

बुद्धेर्मायाबलेनासौ गुणैर्विश्वासघातकैः ।
पातिव्रत्यध्वजां राज्ञीं मातरं ते मम प्रियाम् ॥८६॥

---

१ अस्ति स्मृतिविभ्रमा नामान्वर्थनाम्नी नदी यत्र पृथुशैवला भूरिशो जायन्त इति पौराणिकी कथानुसन्धेया ।

जहार मनसा सार्द्धं क्षुद्रकामोपशान्तये ।
धिक् तां बद्धिं गुणांस्तांश्च येषामित्यं प्रवञ्चना ॥८७॥

अहो तदानीम्—

किमिव पतितमासीद् हेमलेखास्मदीयं
यदधिकमहनीयप्रेमपात्रं तदाख्यम् ।
परिणयशपथैः सम्भाव्यमानं पुरा मे
समनुगतमथैनं पापकं हीनसत्त्वम् ॥८८॥

किञ्च ।

धर्मो यथाप्रकम्प्यः कामेनार्थितोऽपि रमणीयेन ।
कामः सत्त्वाश्रितोऽपि तथा जघन्यवृत्ति भजते ॥८९॥

अये शान्तम् ।

उषसीव प्रवातोऽयं पवनः प्रतिभाति मे ।
तदहं शेषवृत्तान्तं ब्रवीमि ते समासतः ॥९०॥

यदाहमपराह्णविधिना कदाचित् कुञ्जाभ्यन्तरे सुखप्रसुप्तस्तदासौ ते पितृव्यः कालकूटपात्रहस्तः शनरुपेत्य तद्धलाहलोद्गारं मम कर्णयोरभ्यसिञ्चत् । तच्च मनुष्यशोणितस्य तथा विपर्य्ययकारि यथास्य देहावस्थितेषु मर्मसु महातेजोवत् क्षिप्रमनुप्रविश्य पयःस्वम्लद्रव इव लघु शुद्धञ्च शोणितं सहसा बलवद् विपर्य्यासयति । ममापि तथैव संवृत्तम् । तच्च क्षणेन मे सकलानि स्निग्धान्यङ्गानि श्वत्रिण इव दुष्टया त्वचा प्रदुष्टे नातिजुगुप्सितेनावरणेन समावृणोत् ।

इत्थञ्च सुप्तोऽस्मि निमेषमध्याद्
मद्भ्रातृहस्तेन भयङ्करेण ।
सिंहासनं जीवितमात्मजाये-
त्यभीप्सितार्थप्रचयान्निरस्तः ॥९१॥

किञ्च ।

वयोमध्यस्थितस्तावदप्राप्तदुरितक्षयः ।
प्रायश्चित्तमकुर्वाणोऽप्रदत्तपारलौकिकः ॥९२॥

अप्रकाशाभिधानोऽहं सर्वदोषैस्तिरस्कृतः ।
अलब्धप्रतिकारश्च मृत्योर्मुखं प्रवेशितः ॥६३॥

घोरं पापं प्रविहितमहो घोररूपं सुघोरं
वात्सल्यं ते यदिमयि भवेद् वत्स मैवं सहेथाः ।
दीनार्कस्याधिपतिरधुना मा स्म भूत् पापवृत्तः
सम्भोगान्तःशयनरतये रत्नशय्यासनञ्च ॥६४॥

किन्तु यथा तथा वा त्वमेतस्य प्रतिकारं विदधासि न जातु वैरिभावात् किञ्चिदपि ते मातुः प्रतिकूलमाचरेः ।

जननी किल तेऽसौ सुत देवताभ्यः स्थिरसमर्पणमस्तु ।
स्तनयोर्युगलन्त्वस्या व्यथयत्वेनां कण्टकमिव ॥६५॥

तदामन्त्रये त्वामविलम्बितप्रस्थानाय । कुतः ।

खद्योतोऽयमितः पश्य क्षीयमाणमृदुप्रभः ।
अचिराद्दिवसारम्भं प्रब्रवीति न संशयः ॥६६॥

तदापृच्छे तदापृच्छे तदापृच्छे स्मर्यतामयं जनः ।

(निष्क्रान्तः ।)

हेमलेखः—

देवाः सर्वे दिवि सुखपराः श्रूयतां वृत्तमेतत्
किं वा भूमौ कृतवसतयो मन्यतेऽस्मात् परं स्यात् ।
घोरावासं नरकमपि किं तत्र संयोजयानि
धिग् धिक् कष्टं किमपि हृदयं धार्य्यतां धैर्य्यवृत्त्या ॥६७॥

यूयमपि मे व्यायताः शिराः सर्वेष्ववयवेष्ववरुद्धाः ।
मुहूर्त्तं न जरयध्वं ननु समुत्थापयत मां दृढम् ॥६८॥

किं स्मर्यतामिति । हा प्रेतहतक । यावदस्मिन्[1] समभ्याहते कपाले स्मृतिरवतिष्ठते तावत् किं स्मर्यतामिति ।

---

१. स्वललाटे हस्तं निधाय ब्रवीतीति बोध्यम् ।

स्मृतिं क्षुद्रामद्य स्मृतिफलकमध्येऽत्र लिखितां
परिज्ञातार्थां मे प्रसभमपनेष्यामि सकलाम् ।
त्वदीयाज्ञैवाद्य प्रभृति मनसि स्थास्यति चिरं
मया शप्तं देवैरनपरविशुद्धेति सुदृढम् ॥९९॥

अहो प्रदुष्टा स्त्री । अहो हसन्नप्यसौ धूर्त्तो धूर्त्त एवेदानीं भूयसा धूर्त्तहतकः । स्थाने खलु मम पत्रेष्विदं निदधे—

हसन्नपि मुहुः स्निग्धं भवेद्धूर्त्तः पुमान् क्वचित् ।
दीनार्कविषये नूनमेवं भवितुमर्हति ॥ १०० ॥

(इति लिखति ।)

भो पितृव्य । त्वमिदानीमत्र निहितः[१] ।

अथ तानीमानि मे पदाक्षराणि तदापृच्छे तदापृच्छे स्मर्यतामयं जन इति । शप्तं खलु मया ।

**होरास्यमृषालास्यौ**—(नेपथ्ये) भो भो देव । भो भो देव ।

**मृषालास्य**—देव हेमलेख ।

**होरास्यः**—देवा एनं रक्षन्तु ।

**हेमलेखः**—तथास्तु ।

**होरास्यः**—हंहो हो हो देव ।

**हेमलेखः**—हंहो हो हो वत्स । एह्येहि तात ।

(ततः प्रविशति होरास्यो मृषालास्यश्च ।)

**मृषालास्यः**—देव । महाभाग । कथमेतत् ।

**होरास्यः**—देव । का प्रवृत्तिः ।

**हेमलेखः**—अहो आश्चर्य्यम् ।

**होरास्यः**—भद्र देव । तद्भवान् कथयितुमर्हति ।

**हेमलेखः**—नहि । युवामन्येभ्यः कथयिष्यथः ।

**होरास्यः**—देव । देवैः खलु शपे नाहमन्येभ्यः कथयिष्यामि ।

**मृषालास्यः**—देव । अहमपि न कथयिष्यामि ।

१. निहत इति च ध्वनिः ।

**हेमलेखः**—कथं तर्हि युवां मन्येथे। किंवा मनुष्यहृदयमेतच्चिन्तयिष्यति। ननु युवामेतद् गूढं रक्षिष्यथः।

**होरास्य मृषालास्यौ**—अथ किम्। देव। देवैः खल्वावां शपावहे।

**हेमलेखः**—दीनार्कराज्येऽखिले न कश्चिद् धूर्तोऽभूदतोऽभ्यधिकः।
नैवायं[1] धूर्तेषु प्रत्येकमग्रेसरो भृशम् ॥१०१॥

**होरास्यः**—देव। अलमिदानीं समाधिस्थानादुत्थायैतावता नः प्रेतकथितेन।

**हेमलेखः**—ननु सत्यम्। सत्यमभिहितं भवता।

तद्वो[2] ब्रवीमि सुधियः स्फुटमक्षरार्थं
स्पृष्ट्वा करौ वयमितः प्रतियापयामः।

पुरुषमात्रस्य खलु स्वाभिलाषकार्य्यपरता दृश्यते। अतः—

देवप्रसादननिमित्तमनन्यकार्य्यो
गच्छाम्यहं तदनु गच्छत चैव यूयम् ॥१०२॥

**होरास्यः**—देव। इमान्यक्षराणि खलु ते प्रमत्तविजल्पितानि।

**हेमलेखः**—इमानि बत ते मर्माणि स्पृशन्तीति हृदयेनाहं दूये। सत्यं खलु हृदयेनाहं दूये।

**होरास्यः**—देव। नात्र कश्चिद् दोषः।

**हेमलेखः**—वाढं होरास्य। पात्रक[3]मुनेर्नाम्नाहं शपे तत्र खलु महान् दोषो वर्तत इति। अथ सत्त्वमधिकृत्य श्रूयताम्।

यदपि यदपि किञ्चिच्छ्रोत्रयोर्दोषयुक्त-
मवितथमिदमाह प्रेतरूपः पिता मे।

---

१. एतावता सख्योरप्रत्ययाद् वाक्यार्थं परिवर्त्तयति। यद्वा प्रकृतार्थं इष्टे काकुः।

२. बहुवचनमविवक्षितम्।

३. तदाख्यः पापानां शुद्धिहेतुर्मुनिः।

**किमिदमिति सखायौ श्रोतुमिच्छास्ति चेद्वां**
**कथमपि शमयेतं मद्वचोऽपेक्षया ताम् ॥१०३॥**

अथेदानीं युवामस्माकं सखायौ विबुधौ वीरौ चेति कृत्वा दीयतां मे किञ्चिद् वचनम् ।

**होरास्यः**—देव। कथय किमेतदिति । आवां खलु वचनं दास्यावः।

**हेमलेखः**—अद्य खलु रात्रौ यदत्र युवाभ्यां दृष्टं तन्न जातु कथयितव्यम् ।

**होरास्यमृषालास्यौ**—देव । नावां कथयिष्यावः।

**हेमलेखः**—मैवम् । तथा शपेथाम् ।

**होरास्यः**—देव । धर्मेण खलु शपे नाहं कथयिष्यामि ।

**मृषालास्यः**—देव। अहमपि न कथयिष्यामीति धर्मेण खलु शपे।

**हेमलेखः**—असिना मे शपेथाम् ।

**मृषालास्यः**—देव। आवाभ्यां शप्त मेव।

**हेमलेखः**—यथार्थमसिनैव शपेथाम् । यथार्थम् ।

**प्रेतः**—(भूगर्भे) शपेथाम् ।

**हेमलेखः**—हा हा वत्स। त्वमप्येवमात्थ। भो सत्यचरित। किमिहैवासि त्वम् । एतम् । गर्भगृहस्थस्यास्य वचनं शृणुथः । शपेथां तावत् ।

**होरास्यः**—देव। शपथवाक्यं कल्प्यताम् ।

**हेमलेखः**—यदद्य नौ दृष्टं तन्न जातु कथयितव्यमिति। असिना मे शपेथाम् ।

**प्रेतः**—(भूगर्भे) शपेथाम् ।

**हेमलेखः**—इहान्यत्र च वर्त्तसे त्वम्। तदन्यत्र गच्छामः। भद्रमुखौ। इतस्तावत्। मदीयमसिं स्पृष्ट्वा भूयोऽपि शपेथां यदद्य नौ श्रुतं तन्न जातु कथयितव्यमिति। असिना मे शपेथाम् ।

**प्रेतः**—(भूगर्भे) शपेथाम् ।

**हेमलेखः**—भो प्राचीन विलेशय। साध्विदमभिहितम् । भो खनकोत्तम। कच्चित् पृथिव्यामेतावत् क्षिप्रं खननाय प्रभवसि त्वम् । तत् प्रियसखौ भूयोऽप्यन्यत्र गच्छामः।

**होरास्यः**—अहो रात्रिन्दिनाधिदेवते । आश्चर्य्यवत् खल्विदं प्रतिभाति ।

**हेमलेखः**—तदाश्चर्यवदेवैतत् स्वागतीक्रियताम्। होरास्य । पश्य ।

बहून्याश्चर्य्यपूर्वाणि पृथिव्यां दिवि वा पुनः ।
सत्त्वानि[1] परिवर्त्तन्ते शास्त्रस्यागोचराणि च ॥ १०४ ॥

तदेतं तावत् । किञ्च ।

इतः परं मामतथाप्रकाशं
विषादमग्नाद्भुतदीनरूपम् ।
प्रयोजनापेक्षितया सखायौ
देवप्रसादाय तथा सहेथाम् ॥१०५॥

अपि च ।

मामालोक्य विभिन्नवर्णमुरसि व्युत्क्रान्तपाणिग्रहैः
शीर्षाणाञ्चलितैरुत प्रविरलैः सन्दिग्धशब्दाक्षरैः ।
बाढं विद्व इहैव सत्यनियमे[2] ब्रूयाव तथ्यं वच
इत्यावेदयतं न गूढकथितैर्मद्भावसंवेदिताम् ॥१०६॥

अस्मिंश्च दुष्करे कार्य्ये देवा इदानीं वां रक्षन्तु । तथैव च शपेथाम् ।

प्रेतः—(भूगर्भे) शपेथाम् ।
हेमलेखः—शान्तं तावदशान्त सत्त्व । (उभौ शपथं नाटयतः ।)

भद्रमुखौ ।

आत्मानमद्य खलु पश्यतमूनसत्त्वः
प्रेम्णा निवेदयति शश्वदयं जनो वाम् ।
देवप्रसाद इह चेच्छपते तदानीं
न प्रेम सख्यमपि वा परिहास्यतेऽस्य ॥१०७॥

---

१. वस्तूनि भूतानि च ।
२. सत्यस्य नियमेयद्वा सति अनियमे।

सहैव साधयाम[1]स्तावत् । प्रसीदतम् । मुखार्पिताङ्गुलीकौ तु गुह्यं रक्षतं भवन्तौ ।

**कालो ह्ययमतिव्यस्तो हा दिष्टं विहतं मम।**
**यदस्य शोधनार्थाय जातोऽस्मि भुवि नान्यथा ।।१०८।।**

मैवम् । एतम् । सहैव साधयाम[1]स्तावत् ।

(निष्क्रान्ताः सर्वे ।)

**इति पञ्चमं दृश्यम् ।**

**इति प्रथमोऽङ्कः ।**

---

१. गच्छामः । कार्यं सम्पादयाम इत्यपि वा तस्याशयः ।

## द्वितीयोऽङ्कः ।

### प्रथमं दृश्यम् ।

पुरुन्यासस्य गृहस्थः कक्षः ।

(ततः प्रविशति पुरुन्यासो रणार्द्रश्च ।)

**पुरुन्यासः**—रणार्द्र । इदं धनमेतत् पत्रञ्च च तस्योपहर ।

**रणार्द्रः**—देव । उपहारिष्ये ।

**पुरुन्यासः**—भद्र रणार्द्र । यावत् तं नोपगच्छसि तावत् तस्य वृत्तान्तमनुसन्दधान आत्मनः प्राज्ञत्वं[1] ख्यापयितुमर्हसि ।

**रणार्द्रः**—देव । ममाप्येषोऽभिप्रायः ।

**पुरुन्यासः**—अये साध्विदमभिहितम् । साधुतरमिदानीमभिहितं त्वया । आर्य्यं पश्य ।

**पुरीशनगरे[2] के वा सन्ति दीनार्कवासिनः ।**
**केनोपायेन ते सर्वे कंवावासं समाश्रिताः ॥१॥**

**को वा सङ्गो भवेत् तेषामथवा स्यात् कियान् व्ययः ।**
**इति सर्वं सुतस्यार्थे त्वं मे विज्ञातुमर्हसि ॥२॥**

**अथ कथाप्रसङ्गेन प्रश्नानां विकल्पैश्च विज्ञाय ।**
**ते तद्वृत्तज्ञा इति तेभ्यो विशेषोन्मुखो भवेः ॥३॥**

तद्यथा । अहमस्य पितरं सखींस्तथैनमपि यथा कथञ्चिज्जानामीति तेभ्य आत्मनोऽनहुज्ञत्वं वेदयेः । रणार्द्र । कच्चिद् गृहीतार्थोऽसि त्वम् ।

**रणार्द्रः**—देव । अथ किम् । सुष्ठु खलु गृहीतार्थोऽस्मि ।

**पुरुन्यासः**—

---

१. प्रकर्षेणाज्ञत्वञ्च ।

२. तदाख्ये नगरे ।

यथा कथञ्चित् तमवैमि भद्रा
न सम्यगित्येव च भाषितव्यम् ।
अदान्त इत्येव च तेषु तेषु
सोऽयं यदि स्याद् व्यसनेषु मग्नः ॥४॥

इत्थमसौ यथाकामं कल्पितैर्दोषैर्दूषयितव्यः । अये । न तु कथञ्चिदस्य नीचदोषकल्पनया कापि गौरवहानिः कार्य्येत्यत्रावहितो भवेः । तथाहि ।

स्वाभाविका ये प्रभवन्ति दोषा
यूनां प्रमादस्खलिताभिधानाः ।
शश्वद् वयोधर्मतया प्रसिद्धा-
स्त एव तस्मिन् किल योजनीयाः ॥५॥

**रणार्द्रः**—देव । यथाक्षक्रीडेति ।
**पुरुन्यासः**—अथ किम् । अथवा पानमसियुद्धं शपथः कलह इति । एतावदन्तमपि वा ब्रूयाः । किन्तु पश्य ।

दोषास्तथापि निपुणं परिकीर्त्तनीयाः
स्वातन्त्र्यधर्ममनुवर्त्तितया किलैवम् ।
यूनो मदाविलतयाथ मनस्विनोऽस्य
तेजोबलेन भृशदृप्ततयावगाढाः ॥६॥

**रणार्द्रः**—अथ भद्र देव ।
**पुरुन्यासः**—कच्चित् किंनिमित्तमेतावत् क्रियत इति ।
**रणार्द्रः**—देव । अथ किम् । तदहं वेदितुमिच्छामि ।
**पुरुन्यासः**—अये । आर्य्य । इदमत्र मम तात्पर्य्यम् । एषश्चात्र ध्रुवसिद्धिरुपाय इति मे मतम् । तथाहि ।

एभिर्दोषैस्त्वया क्षुद्रैर्दूषिते मम पुत्रके ।
इन्द्रियार्थक्रियायोगाद् भूतार्थैरिव कल्पितैः ॥७॥

लक्षय तावत् ।

ततः परीक्ष्यमाणोऽसौ सखिमुख्यस्तथाविधः ।
तेषु तेषु च दोषेषु दृष्टक्रियः सुतस्य मे ॥८॥

भद्रमुखेति भावेति सखयिति वा देशाद्यनुसारेण ।
सम्बोधनेनाभाष्य तुभ्यं तथैव कथयिष्यति ॥९॥

**रणार्द्र:**—देव । ननु तथा ।

**पुरुन्यासः**—आर्य्य । ततश्चैवं वर्त्तिष्यते । एवं वर्त्तिष्यते । यथा—ननु किं मया वक्तुमुपक्रान्तम् । स्तोमनाम्नाहं शपे मया नाम किञ्चिद् वक्तुमुपक्रान्तमासीत् । कियदन्तं मयाभिहितम् ।

**रणार्द्र:**—भद्रमुखेति सखयिति वाभाष्य तथैव कथयिष्यतीति यावत् ।

**पुरुन्यासः**—तथैव कथयिष्यतीति यावत् । अये । ननु तदानीं स तस्य सखिमुख्यस्तुभ्यं तथैव कथयिष्यति । तद् यथा ।

जानामि भद्रं किल ते सखायं
दृष्टो मया ह्यः स ततोऽन्यदा वा ।
तदा तदा वा तदवस्थ एव
तैस्तैः समेतः सखिभिः पुरेति ॥१०॥

यथा च त्वमात्थ—

तत्र द्यूतासक्तस्तत्र वा पानोत्सवेनापहृतः ।
गुलिकाक्रीडायां वा तत्र सहचरैर्विवदमानः ॥११॥
अथवा भद्रमुखोऽसौ कदाचिद् विलासपण्यक्रयार्थी ।
प्रसिद्धां तत्र विपणिं प्रविशन् किल दृष्टो मयेति ॥१२॥

पश्येदानीम् ।

उद्गालैरिव तन्मृषाप्रवचनैस्तथ्यं ततः प्रोद्धरेः
प्राज्ञाना[1]मियमेव नः प्रभवतां कार्य्यक्रियायां गतिः ।

---

१. प्रकर्षेणाज्ञत्वञ्च ।

**साभिप्रायकथाविशेषरचितैस्तैस्तैः सवक्रोक्तिभि-**
**र्भूयिष्ठैरुपलक्षणैरवितथं लक्ष्यं ध्रुवं लक्ष्यते ॥१३॥**

तस्मात् त्वमपि यथोक्तेन मदुपदेशवचनेन पुत्रस्य मे वृत्तान्तं वेदितुमर्हसि। कच्चिद् गृहीतार्थोऽसि त्वम्।

**रणार्द्रः**—देव। अथ किम्।

**पुरुन्यासः**—स्वस्त्यस्तु ते। आमन्त्रये त्वाम्।

**रणार्द्रः**—भद्र देव।

**पुरुन्यासः**—स्वयमपि तस्य भावं परीक्षेथाः।

**रणार्द्रः**—देव। परीक्षिष्ये।

**पुरुन्यासः**—स्वैरं विहरन्तमेनं तावत् सहतां भवान्।

**रणार्द्रः**—देव। तथा।

**पुरुन्यासः**—आमन्त्रये।

(निष्क्रान्तो रणार्द्रः।)

(ततः प्रविशत्युपाला।)

उपाले। कथमिदानीम्। कस्ते वृत्तान्तः।

**उपाला**—अयि देव देव। बलीयः खलु भीषितास्मि।

**पुरुन्यासः**—शान्तं पापम्। केन पुनर्हेतुना।

**उपाला**—देव। मदीये निभृतागारे—

**यावत् सीवनकर्मणि प्रणिहितं चेतो ममाव्याकुल-**
**मामुक्तस्फुरदन्तरीयवसनस्तावत् कुमारः स्वयम्।**
**प्राप्तो मां सहसा कुतोऽपि चकितो विभ्रष्टशीर्षाङ्गदो**
**भ्राम्यन् पार्ष्णिनिपातिपाण्डुरुचिव्याशीर्णपादावृतिः ॥१४॥**

अपि च।

**जानुद्वयेन रजसा मलिनप्रभेण**
**सद्यः परस्परविघट्टवता तदासौ।**
**वेगादुपेत्य निरयादतिकातराक्षो**
**घोरां प्रवृत्तिमनुवक्तुमिव प्रवृत्तः ॥१५॥**

**पुरुन्यासः**—किं त्वय्यनुरागेणोन्मत्तः ।

**उपाला**—देव । नाहं जाने । सत्यं खलु तेन भीषितास्मि ।

**पुरुन्यासः**—स किमाह ।

**उपाला**—अथासौ मां मणिबन्धने परिगृह्य दृढं धारयामास ।

ततश्च—

आबाहुदण्डमपसृत्य तथा स्थितोऽय-
मित्थं भ्रुवोरुपरि संहितवामहस्तः ।
वक्त्रश्रियं मम निरूपयति स्म युक्त-
स्तच्चित्रलेखनविधाविव साभिलाषः ॥१६॥

तदवस्थश्च चिरं तस्थौ ।

ततः स मद्बाहुविधूननाच्छिर-
स्त्रिरुच्चकैरित्थमधश्च कम्पयन् ।
शनैस्तथा निःश्वसति स्म निर्भरं
तदस्य मर्माणि यथा व्यदारयत् ॥१७॥

तथा कृते स मां मुमोच ।

अंसविवर्त्तितमुखोऽथ लोचनाभ्यां विनेव स प्रतिचलन् ।
निर्ययौ बहिर्द्वारं चिराय मय्यर्पितवीक्षितः ॥१८॥

**पुरुन्यासः**—एहि तावन्मया सह । यावद् राजानमुपगच्छामि । यतः ।

इयमात्मविनाशिनी किल
प्रणयोन्माददशैनमाश्रिता ।
विषमं कुरुते नरस्य या
गुरुभावान्तरवद् हृदि स्थिता ॥१९॥

हन्त । अपि नाम त्वमिदानीमस्मिन् परुषाण्यक्षराणि प्रायुङ्क्थाः ।

**उपाला**—भद्र देव । नैतदेवम् । किन्तु भवदादेशात् तस्य पत्राणि मया प्रत्याख्यातानि मदभ्युपगमश्च प्रतिषिद्धः ।

**पुरुन्यासः**—तेनैव स उन्मादितः । हन्त । नासौ मया सम्यग् विमृष्य सम्भावितः । स किल तैः कामविलसितैस्त्वां भ्रंशयितुमियेषेति मया शङ्कितम् । धिङ् मम सन्देहम् । पश्य ।

परिणतवयसां नो दृश्यते सर्ववस्तु-
ष्वतिशयबलयुक्तः प्रत्ययो यो निसर्गात् ।
प्रभवति खलु यूनां लोकवृत्तेऽप्रतिष्ठः
स तु विमलविवेकन्यूनभावाय सर्वः ॥२०॥

एहि। राज्ञः समीपमेव तावद् गच्छावः।

एतद्राज्ञे निश्चितं वेदनीयं
तस्येदानीं गाढरागानुवृत्तम् ।
तापाय स्यात् तत्तथा गूह्यमानं
न द्वेषाय श्रूयमाणं यथेदम् ॥२१॥

एहि तावत्।

(निष्क्रान्तौ।)

इति प्रथमं दृश्यम् ।

## द्वितीयं दृश्यम् ।

दुर्गस्थः कक्षः।

(ततः प्रविशति राजा राज्ञी रुजाक्रान्तो गूढास्तीर्णश्च सह परिजनेन।)

**राजा**—तातौ रुजाक्रान्तगूढास्तीर्णौ । स्वागतं वाम् । त्वद्दर्शनाभिलाषादपि विशेषतो नियोगापेक्षयास्माभिः शीघ्रमुपसर्पणाय युवामादिष्टौ ।

**श्रुतो वां तदवस्थोऽसौ हेमलेखविपर्य्ययः ।**

तथैवाहमेनं ब्रवीमि।

**नात्मना बाह्यतो वापि प्रतिभाति स एव सः ॥२२॥**

किमन्यत् पितुर्मरणादृते तस्येदानीमप्रकृतिस्थभावस्य कारणं भवेदिति नाहमात्मना विभावयामि। तदहमभ्यर्थये युवामाशैशवात् तेन सह वर्द्धितौ तदीयैर्योवनधर्मैर्विनोदप्रकारैश्च परिचितौ कति दिवसानस्मत्सभायां सुखावस्थितये मतिं कर्त्तुमर्हथ इति । ततो युवयोः सङ्गेन—

**सोऽयं विनोदनशतेषु नियोजनीयो**
**वृत्तान्तमस्य न चिरेण यथाहरेतम् ।**
**किंवा दुनोति तमनन्यविभावनीय-**
**मेवं यदि प्रतिविधेयमलं भवेन्नः ॥२३॥**

**राज्ञी**—भद्रौ भद्रमुखौ । युवां हि तेन बहुशः कथितपूर्वौ । जाने खलु युवयोरपरो न भवतो ययोः सोऽधिकमनुमते स्थितः ।
ततः —

**दाक्षिण्यसौहृदवशात् क्षणमिह चेद् वसेतं नः प्रवृद्ध्यै ।**
**ध्रुवं सम्भावयामो राजोचितैर्वामुपचारैः ॥२४॥**

**रुजाक्रान्तः**—द्वावप्यत्रभवन्तौ देवौ प्रभुत्वाद् यथाभिरुचि नौ नियोक्तुमर्हतो न पुनरनुनेतुम् ।

**गूढास्तीर्णः**—द्वावप्यावामाज्ञाकरावत्रभवतोः पादमूले सर्वथा निवेदितात्माना-वत्रभवद्भ्यां नियोक्तव्यौ ।

**राजा**—भो रुजाक्रान्त । साधो गूढास्तीर्ण । युवाभ्यां धन्यवादाः ।

**राज्ञी**—भो गूढास्तीर्ण । साधो रुजाक्रान्त । युवाभ्यां धन्यवादाः । अविलम्बितं युवामतथाभूतं मम पुत्रमुपगन्तुमर्हथः । गच्छत । यूयमपि केचिदिमौ भद्रमुखौ तत्र प्रापयत यत्र हेमलेखो वर्त्तत इति ।

**गूढास्तीर्णः**—**यदि देवाः प्रसीदन्तु सङ्गतं नौ क्रियास्तथा ।**
**प्रसादयन्तु तं तावद् भवन्तु चास्य सिद्धये ।। २५।।**

**राज्ञी**—अये । तथास्तु ।

(निष्क्रान्तौ रुजाक्रान्तगूढास्तीर्णौ सह कतिपयपरिजनेन ।)

(ततः प्रविशति पुरुन्यासः ।)

**पुरुन्यासः**—भद्र देव । नरोहदेशाद् राजदूतौ प्रीत्या प्रतिनिवृत्तौ ।

**राजा**—शश्वद् भवान् नः प्रियनिवेदयितृकः ।

**पुरुन्यासः**—देव । किं तथेति । महाभाग । एष ते विज्ञापयामि—

**जगत्प्रभोर्यथैवाहं प्रीत्यर्थं भवतोऽपि च ।**
**धारयामि यथात्मानं नियोगं पालयामि च ।।२६।।**

किञ्च ।

**न मे मतिः कार्य्यविशेषदर्शिनी**
**यथा पुरा नैव फलाय कल्पते ।**
**भवेत् कुमारस्य विवेकविप्लवे**
**न हेतुरस्मिन् विदितो मया यदि ।।२७।।**

**राजा**—अहो । तमेव तावत् कथय यं श्रोतुं भृशमाकुलोऽस्मि ।

**पुरुन्यासः**—अग्रे तावद् राजदूतौ प्रवेशनीयौ । ततो मत्सन्देशो महोत्सवं मधुरेण समापयिष्यति ।

**राजा**—भवानेव सभाजयित्वा तौ प्रवेशयितुमर्हति ।

(निष्क्रान्तः पुरुन्यासः।)

प्रिये गर्त्तरुदे। पुत्रस्य ते विमनस्त्वस्य निमित्तं मया विदितमित्याह।

**राज्ञी—** **किमन्यदत्र प्रभवेन्निमित्तं**
**तस्मान्निमित्तादिति तर्कयामि।**
**यदस्य तातो निधनं जगाम**
**समागमो नौ च तथाचिरेण ॥२८॥**

**राजा—**भवतु। तं तावत् परीक्षिष्यावहे।

(ततः पुनः प्रविशति भूरिमुण्डकर्णेलास्याभ्यां सह पुरुन्यासः।)

स्वागतं वां प्रियसखौ। भूरिमुण्ड। कथयास्मन्मित्रस्य नरोहराजस्य सकाशात् किमुपलब्धम्।

**भूरिमुण्डः—**प्रेष्ठानि ते प्रत्यभिनन्दनस्वस्तिवाक्यानि। स तु निवेदितमात्रे तस्मिन्नर्थे स्वभ्रातृव्येनाचरितस्य करग्रहणस्य प्रतिबाधनाय निदेशं ददौ। पोलकैः सह सम्परायार्थं तदिति किल सोऽमन्यत। परीक्ष्य तु देवं प्रति विहितमिति ज्ञातम्। ततश्चाहो जराव्याधिपङ्गु त्वदोषादहमनेन विप्रलब्ध इति समन्युः कुमारस्फूर्त्तवीर्यस्य क्रियाप्रतिष्ठम्भनार्थमादिदेश। अलं बहुना। कुमारोऽपि तन्निदेशे वर्त्तमानस्तेनोपालब्धो नाहं कदापि दीनार्केश्वरं प्रति शस्त्रव्यवहारं करिष्य इति शपथञ्चकार। इत्थंगते वृद्धो नरोहस्वामी सञ्जातगुरुप्रहर्षस्तस्मै संवत्सरदेयानि मुद्राणां त्रीणि सहस्राणि पोलकैः सह सम्परायार्थं यथापूर्वं तत्सैन्याधीशत्वञ्च प्रददौ। यथा चात्र लिखितम्। (पत्रमर्पयति।) तदर्थञ्च भवद्विषयान्तर्गतेन भूमिभागेन तस्य निर्विघ्नयात्रासिद्धये पत्रार्पितरक्षानुसारिसञ्चारनियमां देवस्याभ्यनुज्ञां प्रार्थयते।

**राजा—**एतदभिमतं मे। यथाकालञ्च वयमेतद् वाचयाम एतस्य प्रतिसन्देशं प्रेषयामः कार्य्यञ्चैतच्चिन्तयामः। अस्मिन्नन्तरे कृतप्रयत्नाभ्यां वां धन्यवादाः।

**विश्राम्यतं युवां तावत् स्वागतं वां गृहागतौ।**
**युवाभ्यामद्य यामिन्यां सह भोक्ष्यामहे वयम् ॥२९॥**

(निष्क्रान्तौ भूरिमुण्डकर्णेलास्यौ ।)

**पुरुन्यासः**—साधु समापितमेतत् कार्य्यम् ।

अथ—

प्रभुत्वं कीदृशं स्यात् किं कार्य्यं कुतो नु दिवसो दिवसः ।
कुतश्च रात्री रात्रिः कुतो नु स्यात् कालः कालः ॥३०॥

इति देवौ व्याख्यातुं प्रयतिष्ये भवतोश्चेद् वशे स्थितः ।
रात्रिं दिवसञ्चैतद् नाशयेत् कालञ्च तृतीयम् ॥३१॥

समासबद्धं वचनं हि तद्विदो
वदन्ति ते सारवदर्थसाधनम्[1] ।
सविस्तरञ्च स्फुटमर्थसंक्षय—
मतः समासेन किल ब्रवीम्यहम् ॥३२॥

उन्मत्त एवैष सुतस्त्वदीय
उन्मत्तमेवैनमहं ब्रवीमि ।
उन्मत्तशब्दः कथमन्यथा स्या-
दुन्मत्तभावाश्रित एव तावत् ॥३३॥

आस्तां तावदेतत् ।

**राज्ञी**—अल्पीयसालङ्कारेण भूयः सारमुदाह्रियताम् ।

**पुरुन्यासः**—आर्य्ये । शपे खलु न मयालङ्कारः प्रयुज्यते ।

ननु सत्यमिदं यदेष पुत्रो
भृशमुन्मत्त इहैव ते पुरस्तात् ।

---

१. सारवद्वाक्यम् ।

ननु सत्यमिदं यदद्य शोच्य--
मथ शोच्यञ्च यदेतदद्य सत्यम् ॥३४॥

इत्यवर एषोऽलङ्कारः । माभूदेवम् । अलङ्कारो हि मया न प्रयोक्तव्यः ।

उन्मत्त एष इति तावदवस्थिते नः
कार्य्यस्य कारणममुष्य विवेचनीयम् ।
दोषस्य कारणमिति प्रतिशन्ख्यतां वा
स्वात् कारणाद्धि भवति स्फुटदोषकार्य्यम् ॥३५॥

इत्थं स्थिते तु शेषोऽयमित्थमेवावशिष्यते ।
ततः श्रुत्वा कथाशेषं विचारयितुमर्हसि ॥३६॥

अस्त्येव तावद् दुहिता ममैका
ममैव सा यावदियं मदीया ।
या लक्ष्यतां सम्प्रति पत्रमेतद्
मह्यं ददौ देयमिति प्रतीता ॥३७॥

श्रुत्वा चैतत् स्वयमनुमातुमर्हसि । (वाचयति ।)
देवीं मम मनोरथप्रियतमां कान्तामुपालां प्रति। नैष साधुसमुदाचारः। पापसमुदाचार एषः । कान्तेति खलु पापसमुदाचार एषः। अथापि श्रोतुमर्हसि। तद् यथा। (वाचयति।) तस्याः परमोत्तमे विशदे हृदय एतानीत्यादि--

**राज्ञी**--किमेतान्यक्षराणि हेमलेखेन तामुद्दिश्य प्रेषितानि ।

**पुरुन्यासः**--भवति । क्षणं तिष्ठ। यथावृत्तं निवेदयामि । (वाचयति।)

प्रभवति यदि तारा ज्योतिषा रिच्यमाना
न चरति यदि सूर्य्यो रश्मिभिर्व्योममध्ये ।
ऋतमनृतशरीरं यद्यपि स्यात् कथञ्चित्
त्वयि खलु हृदयं मे विद्धि भावानुबन्धि ॥३८॥

प्रिय उपाले। नाहमक्षररचनायां निपुणः । न जाने ममौत्सुक्यं छन्दसा परिमातुम्। अयि प्रेष्ठतमे। त्वय्यहमत्यन्तमेव बद्धभाव इत्यवधारयेति प्रियतमे त्वदीयस्य चिरदासस्य यावद् देहोऽयमस्य श्रीहेमलेखस्येति ।

**एतन्मे दर्शितं पत्रं मद्विधेयतया तया ।**

सहैव स्थानकालोपायैः—

**कण्ठोक्ताः प्रार्थनाश्चास्य प्रापिताः श्रुतिगोचरम् ॥३९॥**

**राजा**—कथं नु तयास्यानुरागो गृहीतः।

**पुरुन्यासः**—ननु कीदृशं मां भवान् मन्यते ।

**राजा**—विश्वस्तश्च महामनाश्चेति ।

**पुरुन्यासः**—हन्त । तथैवात्मानं दर्शयिष्यामि । किं भवन्तौ मन्येते । यदैवैतद्दवृत्तानुरागवृत्तं सम्प्रवृत्तं दुहित्रानिवेदितपूर्वमेव मया प्रत्यक्षीकृतं तावत् किं भवान् मन्यते किं वेहात्रभवती महिषी मन्यते तदा मया तयोः प्रणयदौत्यमाचरितमुत सुप्तहृदयेनेव तत् सोढमाहोस्वित् केवलमुपेक्षितमिति । किं न्वत्रभवन्तौ मन्येते । मैवम् । ततोऽहं सद्य एव तत्प्रतीकारप्रवृत्तो मदीयां कन्यामित्थमन्वशासम्—

**कुमारो हेमलेखो हि नासौ ते भाग्यगोचरः ।**
**अवबुध्यस्व कल्याणि नैतदेवं भवेदिति ॥४०॥**

ततश्च त्वयात्मा तद्दृष्टिपथाद् रक्षितव्यस्तद्विसृष्टो दूतस्त्वया न सम्भावयितव्यस्तत्प्रणयोपहारश्च त्वया नाङ्गीकार्य्य इति तामहमादिशम् । तथा कृते च सा मम निदेशे वर्तमाना तथैवाचरत् । किं बहुना । ततश्च कुमारः—

**प्रत्याख्यातः कथमपि तया तत्र निर्वेदमाप**
**तस्माद् ग्लानिं पुनरपि ततश्चिन्तया जागरूकः ।**
**दैन्यं भेजे मृदुमतिरसौ तत्परं लब्धमोहः**
**पश्चात् प्राप्तः क्रमगतिवशाच्छोच्यमुन्मत्तभावम् ॥४१॥**

**राजा**—किमेवमेतदिति मन्यते ।

**राज्ञी**—तथैव खलु सम्भवेत् ।

**पुरुन्यासः**—पृच्छामि खलु भवन्तं यदाहमत्र वमेतदेवमेव ।
**तदन्यथा परिवृत्तं स कालो भवता दृष्ट इति ॥४२॥**

**राजा**—न खलु मया दृष्टः ।

**पुरुन्यासः**—(आत्मनः शिरः स्कन्धञ्चाभिलक्ष्य ।)

**अस्माद् वियोजय तदेतदनन्यभाव्य-**
**मत्रान्यथा यदि भवेत् किल गूढहेतु ।**
**तत्कारणान्तरपरम्परया प्रवक्ष्ये**
**भूतार्थतत्त्वमपि चेन्निहितं गुहायाम् ॥४३॥**

**राजा**—कथं पुनरस्माभिः परीक्षणीयं भवेत् ।

**पुरुन्यासः**—जानासि खलु स कदाचिद् बाह्यशालायां चिरं परिक्रामति ।

**राज्ञी**—ननु तथा ।

**पुरुन्यासः**—तस्मिन् समये मम दुहितरमस्मै मोचयिष्ये। ततो भवानहञ्च विलम्बिचित्रपटेनात्मानं गोपायन्तावनयोः संवादं श्रोष्यावः ।

**अथ यदि भवेत् तस्यां भावो न तस्य मनोगतो**
**भृशमधिगतः सोन्मादत्वं न वा तत एव सः ।**
**न भवतु पुनः साचिव्यं मे तदा विषये तव**
**पशुभिरवरं क्षेत्रैश्चैव स्फुटं स्थितिसाधनम् ॥४४॥**

**राजा**—एतत् परीक्षिष्यावहे ।

**राज्ञी**—ननु पश्य । एषोऽयं तपस्वी किमपि पठन्नित एवाभिवर्त्तते ।

**पुरुन्यासः**—तदहमभ्यर्थयेऽपसरतामपसरतां भवन्तौ । यावदहमनुपदमेवास्य पुरोवर्त्ती[1] भवामि ।

(निष्क्रान्तौ राजा राज्ञी च सह परिजनेन ।)

(ततः प्रविशति यथोक्तव्यापारो हेमलेखः ।)

अये । प्रसीद । भद्र देव हेमलेख । का नु खलु ते प्रवृत्तिः ।

**हेमलेखः**—नन्वीश्वरो भद्रं वितरतु ।

---

१. अनुपदं पुरोवर्त्तीति विरोधाभासश्च ।

पुरुन्यासः—देव। किं प्रत्यभिजानासि माम्।
हेमलेखः—सुष्ठु खलु प्रत्यभिजानामि। मत्स्यबन्धोऽसि त्वम्।
पुरुन्यासः—देव। नाहं तथा।
हेमलेखः—तर्हि तथैव खलु साधुर्यदि स्याः।
पुरुन्यासः—देव। किं साधुरिति।
हेमलेखः—अये। आर्य्य। यादृशी जगद्व्यवस्था साधुत्वं हि दशसहस्रेषु कदाचिदेकमाश्रयेत्।
पुरुन्यासः—देव। ननु सत्यमेतत्।

**हेमलेखः—एषापि विगलितमिदं मांसमधर[1]स्पर्शनमर्हतीति।**
**समुपरतायां[2] शुन्यां भूरिशो यदि कृमीञ्जनयति ॥४५॥**

अपि नामास्ति ते दुहिता।

पुरुन्यासः—देव। अस्ति।
हेमलेखः—मा सा तपति सूर्य्ये चरतु। सखे। एतद् विधेहि तावत्।
पुरुन्यासः—(स्वगतम्) ननु किमनेन मन्यसे। अधुनापि मम दुहितरमभिसन्धाय मन्त्रयते। प्रथमन्तु नाहमनेन विदितः। मत्स्यबन्धोऽसीत्येव पूर्वमाह।

**दूरं गतस्तपस्वी सोन्मादशायां स दूरं गतः।**
**प्रणयाद् यूनो ममापि सोन्मादभाव एवमासीत् ॥४६॥**

भूयोऽप्येनं पृच्छामि। देव[3]। किं नु खलु पठति भवान्।
हेमलेखः—शब्दः शब्दः शब्द इति।
पुरुन्यासः—देव। को नु विषयः।
हेमलेखः—कयोः।
पुरुन्यासः—देव। को नु विषयो यमिदानीं पठति भवानित्यहं ब्रवीमि।
हेमलेखः—आर्य्य। अपवाद इति। साक्षेपवचनधृष्टस्त्वत्राह जरठानां हि पुरुषाणां पाण्डुराणि श्मश्रूणि भवन्ति मुखञ्च बलिपलितमक्षिणी च

---

१. अधरस्याधरं निकृष्टञ्च स्पर्शनम्।
२. सम्यग् मृतायामुप समीपे रतायाञ्च।
३. इत्यादि प्रकाशमिति बोध्यम्।

तालनिर्यासमिव पृथुलं क्षीरमुद्वमतः। किञ्च। तेषां वुद्धिर्भूयसावहीना जानुद्वयञ्च परिदुर्बलं जायते। आर्य्य। इति सर्वस्मिन् खलु मे वलवान् सम्प्रत्ययः। एतदभिधानन्तु नाहं न्याय्यं मन्ये। कुतः।

**ममेव हि भवेत्तात प्रावीण्यमपहाय तदीयं वयः।**
**यदि तु कुलीरवत्त्वमपि वयसि व्युत्क्रमितुं शक्नुयाः॥४७॥**

**पुरुन्यासः**—(स्वगतम्) यद्यप्येष सोन्मादभावो भवेत् तथाप्यत्र खलु कोऽपि क्रमो वर्त्तते। देव[1]। किं वायु[2]मासेविष्यते भवान्।

**हेमलेखः**—किं मम मृत्यवे।

**पुरुन्यासः**—ननु स हि वायोर्वाह्य एव[3]। (स्वगतम्) कथमर्थवन्ति खल्वस्य प्रतिवचनानि कदाचित् सम्पद्यन्ते। एवमुन्मत्तभाव एष प्रायेण शब्दप्रयोगसौकर्य्यमावहति यत् प्रकृतिस्थभावेनापि तादृशवाग्विभवक्रमेण प्रकाशयितुं न शक्यते। यावदेनमामन्त्रयिष्ये। सहसैतेन सह कन्यायाः संयोगञ्च तावद् घटयामि। देव। महाभाग। प्रह्वोऽहं भवदापृच्छामभ्यर्थये।

**हेमलेखः**—आर्य्य। नातः परं खलु मत्तोऽभ्यर्थयितुं शक्नोति भवान् यदहं प्रीततरेण मनसा भवते प्रयच्छेयम्। केवलन्तु मम जीवितं वर्ज्जयित्वा जीवितं वर्ज्जयित्वा जीवितं वर्ज्जयित्वेति।

**पुरुन्यासः**—देव। आमन्त्रये भवन्तम्[4]।

**हेमलेखः**—अहो विषमं वैधेयत्वमेतेषां वृद्धानाम्।

(ततः प्रविशति रुजाक्रान्तो गूढास्तीर्णश्च।)

**पुरुन्यासः**—युवां देवं हेमलेखं द्रष्टुं प्रस्थितौ चेदसावत्र वर्त्तते।

**रुजाक्रान्तः**—(पुरुन्यासं प्रति) आर्य्य। स्वस्ति।

(निष्क्रान्तः पुरुन्यासः।)

---

१. इत्यादि प्रकाशमिति बोध्यम्।
२. वातं वायुरोगञ्च। उभयमपि रुग्नस्य मरणावहम्।
३. मृत्युर्हि प्राणवायुं वायुरोगञ्चातिवर्त्तते।
४. किञ्चिदपसरतीति बोध्यम्

**गूढास्तीर्णः**—देव। महाभाग।

**रुजाक्रान्तः**—प्रेष्ठतम देव।

**हेमलेखः**—उत्तमौ प्रियसखौ। गूढास्तीर्ण। काते प्रवृत्तिः। अये रुजाक्रान्त। नु कथं वर्त्तेथे वत्सौ।

**रुजाक्रान्तः**—पृथिव्या नातिसुभगौ सुताविव।

**गूढास्तीर्णः**—नात्यन्तसुखिनाविति खलु सुखिनौ। नावां सौभाग्यलक्ष्म्याश्चूडायां मध्यमौ मणी।

**हेमलेखः**—न वा तस्याश्चरणयोर्नूपुरगुलिके[1]।

**रुजाक्रान्तः**—देव। नान्यतरौ।

**हेमलेखः**—तेन हि युवां तस्याः प्रसादमध्ये वर्त्तेथे। का प्रवृत्तिः।

**रुजाक्रान्तः**—देव। न कापि। केवलन्तु जगदिदं साधुत्वपरायणं संवृत्तमिति।

**हेमलेखः**—तेन हि प्रलयदिवसः समासन्नः। किन्तु युवयोः प्रवृत्तिर्नावितथा। विशेषेण खलु पृच्छामि। प्रियसखौ। किं नु श्रियो हस्ताद् युवामर्हथो येनास्मिन् कारागारे निक्षिप्तौ।

**गूढास्तीर्णः**—देव। किं कारागारमिति।

**हेमलेखः**—दीनार्कराज्यं कारागारमेव।

**रुजाक्रान्तः**—तेन हि जगदिदं कारागारम्।

**हेमलेखः**—शोभनं कारागारम्। यत्र हि बहूनि बन्धनानि गुप्तिगृहाण्यन्धकूपाश्च विद्यन्ते। दीनार्कराज्यन्तु तेषामवरम्।

**रुजाक्रान्तः**—देव। नैतदावयोर्मतम्।

**हेमलेखः**—तेन हि नैतद् युवयोः कारागारम्। कुतः।

**सदसदिति प्रस्तावो नायं परमार्थेन हि युक्तिसहः।**
**मन एव हि तत्सर्वं यत्सदसद्वापि भावयति॥४८॥**

एतत् खलु मे कारागारमेव।

**रुजाक्रान्तः**—तर्हि भवत उत्सर्पिणी प्रार्थनैवैवं भावयति। भवतो मनोरथापेक्षया क्षोदीयानेष विषयः।

**हेमलेखः**—हा ईश्वर। वीजपुटेऽपि निहितात्माहमात्मानमनन्तस्य जगतः प्रभुत्वे स्थापयेयं यदि नाम मम कष्टाः स्वप्ना न भवेयुः।

---

१. इति काकु।

**गूढास्तीर्णः**—ते स्वप्ना नाम मनोरथा भवन्ति। आरूढमनोरथानामात्मा हि स्वप्नस्य च्छायामात्रं भवति।

**हेमलेखः**—ननु स्वप्न एव च्छायामात्रं भवति।

**रुजाक्रान्तः**—सत्यम्। मनोरथो नाम वायुरिव तादृशो लघुशरीरो यथैनमहं छायायाश्छायामात्रमिति ब्रवीमि।

**हेमलेखः**—तेन हि नो भिक्षुकाः सत्त्वानि राजानः स्फीतवीराश्च भिक्षुकाणां छायारूपा भवन्ति। किं त र्हि राजसभैव गन्तव्या। सत्यं खलु न मे युक्तिबलं प्रसरति।

**रुजाक्रान्तगूढास्तीर्णौ**—ननु भवन्तं सेविष्यावहे।

**हेमलेखः**—मा मैवम्। न प्रेष्यवर्गेषु युवां स्थापयामि। साधुरिव सत्यवचनं ब्रवीमि चेदतिविषमं खलु सेवितोऽस्मि प्रेष्यैः। अथ सौहार्दानुरोधेन पृच्छामि कुत आलस्यनीडेऽस्मिन् युवयोरागमनम्।

**रुजाक्रान्तः**—देव। भवन्तं द्रष्टुमित्येव नान्यन्निमित्तम्।

**हेमलेखः**—भिक्षुकोऽहं धन्यवादप्रदानेऽपि दीनः। तथापि युवाभ्यां मे धन्यवादाः। प्रियसखौ। मम हि धन्यवादा भृशमकिञ्चित्कराः। किं न युवामाहूतौ। किं स्वच्छन्दानुवर्तनमेतत्। किमात्माभिप्रायेणेहागमनम्। एतम्। यथान्यायं प्रोच्यतां तावत्। एतमेतम्। ननु कथयतम्।

**गूढास्तीर्णः**—देव। किं नु ब्रूयाव।

**हेमलेखः**—कथम्। यथायथमिति चेन्ननु यदपि तदपि वक्तव्यम्। युवामाहूतौ। ऋजुत्वात् संगोपयितुमशक्यया युवयोर्दृष्ट्यैवैतत् कथ्यते। जाने खलु युवां साधुना महाराजेन देव्या चाहूतौ।

**रुजाक्रान्तः**—देव। किमर्थम्।

**हेमलेखः**—तत्तु युवाभ्यामेव मह्यं वेदयितव्यम्। अहन्तु नः परस्परं सौहार्दानुरोधेन यौवनधर्मसादृश्येन चिरनिबद्धभावापेक्षया किञ्च यदपरमिह श्रेयान् प्रवक्ता समाक्रोशेत् तेन निमित्तभूतेन युवामुद्बोधयामि किं युवामाहूतौ न वेति विस्पष्टमार्ज्जवेन च कथ्यताम्।

**रुजाक्रान्तः**—(गूढास्तीर्णं प्रति जनान्तिकम्) किमाह भवान्।

**हेमलेखः**—(जनान्तिकम्) मा मैवम्। त्वं हि मे नयनयोर्गोचरः। यदि मयि वां स्नेहोऽलं खलु गोपायित्वा।[1]

**गूढास्तीर्णः**—देव। आवां खल्वाहूतौ।

---

१. एतद्वाक्यमुभावुद्दिश्येति बोध्यम्।

**हेमलेखः**—किमर्थमिति ब्रवीमि । तेन च मम प्राग् ज्ञानेन युवयोरुत्तरप्रकाशनं बाधिष्यते। देवाय देव्यै च दत्तस्य वां समयस्य न किञ्चनापहीयेत । सम्प्रति खलु किमिति न जाने मम प्रमोदो विनष्टस्तत्तदाचारानुष्ठानञ्च मया विस्मृतं हृदयञ्च मे तथा गुरुव्यथं यथैषा रमणीया पृथिवी किमप्युषरोदग्रभूमिरिव मे प्रतिभाति। पश्येदं परार्द्ध्यचन्द्रातपसवर्ण-मन्तरीक्षमथ महानूर्द्धावलम्बी य एष आकाशस्तथेदं हिरण्मयज्योतिर्दीप्त-मुदाराच्छादनप्रायमम्बरतलं किं नु प्राणापघातिविषबाष्पव्यतिकरा-न्नान्यदिव प्रतिभाति मे । अहो किमपि विधानातिशय एष मानुषः। मतिविभवेन किमपि महीयान् । सामर्थ्यातिरेकेन किमप्यनन्तः । रूपेन क्रियया च किमप्यभिव्यक्तः प्रशस्यश्च। कर्मणा देवदूत इव । विज्ञानेन देव इव । तिलको जगच्छ्रियः । प्राणिनां ललामभूतः । तथापि किं नामानेन मे भस्मैकसारेण। पुरुषो हि न मां नन्दयति। नहि। न वापि स्त्री । तदीयं स्मितन्तु तदेवमिति कथयतीव ।

**रुजाक्रान्तः**—देव। नैतादृशं मे मनोगतमासीत् ।

**हेमलेखः**—किंनिमित्तं तर्हि तदीयं स्मितं यदाहमब्रवं पुरुषो न मां नन्दयतीति ।

**रुजाक्रान्तः**—देव। यदि खलु पुरुषस्त्वां न नन्दयति कीदृशं मन्दं नु कुलीलवा-स्त्वया सम्भावयिष्यन्त इति। ते ह्यन्तरावाभ्यामतिक्रान्ताः। भवन्तं सेवितुमितोमुखा वर्त्तन्ते च।

**हेमलेखः**—योऽसौ राज्ञो रूपमभिनयति स मयाभिनन्दनीयः। महाभागोऽसौ मया कर[1]प्रदानेन सम्भावयिष्यते। साहसिकोऽश्ववार आत्मनोऽसिचर्मणी व्यापारयतु । प्रणयी न वृथा शोचतु। चपलमतिः पुरुषः शुभोदर्कं वर्त्तताम्। विदूषकः सुलभहास्यान् जनान् प्रहासयतु । नायिकावेषी नटश्चात्मनो भावं मुक्तकण्ठमुदीरयतु। अन्यथा श्लोक एव तावद् विरामः कल्प्यताम् । अथ के नामैते कुशीलवाः।

**रुजाक्रान्तः**—एते नाम ते नागरिका दुरन्ताभिनयकुशला येषु ते महती प्रीतिरासीत्।

**हेमलेखः**—किमिति ते देशपर्य्यटनं कुर्व्वन्ति । तेषां हि नगरसंवासो यशसोऽर्थस्य चेत्युभयलाभहेतुतया साधीयानासीत् ।

---

१. करो राज्ञे देयं धनं हस्तश्च ।

**रुजाक्रान्तः**—अभिनवव्यवस्थया हि तत्र बाधा समुत्पन्नेति तर्कयामि ।

**हेमलेखः**—अपि नाम ते तथा सम्भाविता यथा मे नगरवसतावासन् । अपि नाम ते तथादृताः ।

**रुजाक्रान्तः**—न हि । न खलु तथादृताः ।

**हेमलेखः**—कथमिति । किमप्रयोगेन हीनरसाः संवृत्ताः ।

**रुजाक्रान्तः**—न हि । तेषां प्रयोगः खलु यथापूर्वं शोभत एव । किन्त्वार्य्य तत्र केचिद् बालनटाः सन्ति ये श्येनशावका इव प्रकृतमनपेक्षमाणा बलवदुत्क्रोशन्ति तथा च लोकेनोच्चैः सहस्ततालमभिनन्द्यन्ते । एष इदानीमाचारो लोकरङ्गाख्यं तथा मुखरयति यथा कृपाणधारिणोऽपि[1] बहवो हंसपक्षेभ्यो[2] विभ्यतस्तत्रावतरीतुं नोत्सहन्ते ।

**हेमलेखः**—कथम् । किं ते बालाः । केन खलु ते भ्रियन्ते । कथं वा भ्रियन्ते । किमात्मनो यावन्न गायकत्वहानिस्तावन्मात्रं ते स्ववृत्त्यौ वर्त्तिषन्ते । अग्रे च सम्भाव्यमाने वित्ताभावे यदा ते लोकनटानां पदवीमारोहन्ति तदेमे कवयोऽस्मत्प्रतीपाचरणं कुर्वन्तीति ब्रुवाणाः किमात्माधिकारं नावज्ञास्यन्ति ।

**रुजाक्रान्तः**—बाढम् । उभयोरपि पक्षयोर्बहु व्यापारयितव्यमासीत् । लोकोऽपि तावन्योऽन्यसंघर्षणे प्रचोदयंस्तत्र पापं न मन्यते । यावच्च रूपकवस्तुनि कवेर्नटस्य चान्योऽन्यसंघर्षो नाकल्प्यत तदर्थं तावदर्थव्ययोऽपि न प्रतिश्रुतः ।

**हेमलेखः**—अपि नामैवम् ।

**गूढास्तीर्णः**—अये । तत्र हि भूयान् वाग्विभ्रम आसीत् ।

**हेमलेखः**—किं बाला एव जयश्रियमपहरन्ति ।

**रुजाक्रान्तः**—अये देव । ते खलु तां समौलिरत्नमपहरन्ति ।

**हेमलेखः**—नैतदतीव चित्रम् । पश्य मम हि पितृव्यस्तावद् दीनार्केश्वरः । ये नाम जीवति मे पितरि तं प्रति मुखविकारमकुर्व॑स्त इदानीमस्यैव क्षुद्र-

---

१. वीराभिनयिनो नटाः ।

२. हंसपक्षरचितलेखनीधारिभ्यः कविभ्यो येषां वचनं बालनटाः स्वैरमुद्गिरन्ति ।

प्रतिकृतेरर्थं एकैकशो विंशतिमथ चत्वारिंशतमथवा पञ्चाशतमथवापि शतं मुद्राः प्रददति। ईश्वरशोणितेनाहं[1] शपे—

**गूढं खलु तदिह वस्तु विद्यते किमपि निसर्गातिलङ्घि।**
**तदेतदिति विनिश्चित्य यदि स्याद् विज्ञानगोचरम् ॥४६॥**

(नेपथ्ये तूर्यनिर्घोषः।)

**गूढास्तीर्णः**—एते ते कुशीलवाः।

**हेमलेखः**—भद्रमुखौ। आलस्यनीडेऽस्मिन् स्वागतं वाम्। एतं तावत्। हस्तौ दत्तम्। स्वागतसम्प्रदर्शनमित्येव समुदाचारः। तमेव तावदित्थमनुवर्त्तिष्ये। अन्यथा ब्रवीमि वां कुशीलवानां समभिनन्दने प्रकाशं प्रदर्शनीये भवदपेक्षया तत्तु महोत्सवतामापाद्येत। स्वागतं वाम्। मम खलु पितृव्यतातः पितृव्यामाता चात्र विप्रलब्धौ।

**गूढास्तीर्णः**—प्रिय देव। कुत्र।

**हेमलेखः—वायूत्तरदिग्भवेन वायुनास्मि किल तावदुन्मादितः।**
**वहति दक्षिणे वायौ श्येनबकयोस्तु विशेषज्ञः ॥५०॥**

(ततः प्रविशति पुरुन्यासः।)

**पुरुन्यासः**—भद्रमुखाः। साधु[2] वः।

**हेमलेखः**—गूढास्तीर्ण। श्रूयताम्। त्वमपि शृणु प्रतिकर्णं श्रुतिपरायणः। यमिमं महाबालं पुरः पश्यथो युवां नायमिदानीमपि जातकपट्टवासः परिमुक्तवान्।

**रुजाक्रान्तः**—मन्ये भूयोऽपि तदनुप्राप्तः। वृद्धो हि पुरुषो द्विर्बालत्वमधिगच्छति।

**हेमलेखः**—स हि मे नटप्रवृत्तिं निवेदयितुं प्राप्त इति वां घोषयामि। लक्ष्यतां तावत्। आर्य्यौ। सत्यमुक्तं भवद्भ्याम्। सोमवासरे दिवामुखे तदेवमासीत्।

---

१. ईश्वरपुत्रस्य 'क्रुष्ट'स्य स्वस्तिकदण्डे विध्यमानस्य क्षरता शोणितेनेत्यर्थः।

२. स्वस्तीत्यर्थे क्लिष्टतया प्रयुक्तम्। एवमन्यत्र।

**पुरुन्यासः**—देव । अस्ति कश्चिद् वाग्विशेषः ।

**हेमलेखः**—देव । अस्ति कश्चिद् वाग्विशेषः । यदा किल रोमनगरे रसाश्वासो[1] नाम नट आसीत् ।

**पुरुन्यासः**—देव । नटाः खल्वितः प्राप्ताः ।

**हेमलेखः**—प्रलपितं प्रलपितम् ।

**पुरुन्यासः**—शपे खलु शिरसा[2]—

**हेमलेखः**—तेन हि सर्वो नटो रासभवाहनः संवृत्तः[3] ।

**पुरुन्यासः**—लोकश्रेष्ठा ह्येते नटा रूपकं दुरन्तं वा प्रहसनं वैतिहासिकं वा मेषपालिकं वा मेषपालिकप्रहसनं वैतिहासिकमेषपालिकं वा दुरन्तैतिहासिकं वा दुरन्तप्रहसनैतिहासिकमेषपालिकं वा स्थानैकत्ववद् वा नियमातिलङ्घिपद्यात्मकं वा तेषु तेषु परमभिनयकुशलाः । सेनाकीयं[4] रूपकं हि नैषां गुरुभारं न वा प्लुतासीयं[5] लघुवृत्तम् । शास्त्रसम्मतं नाट्यं वा स्वतन्त्रं वैतदुभयप्रयोग एते नाम कुशीलवाः ।

**हेमलेखः**—अयि भो उस्नाल[6]वासिन्यायाधीश ज्येष्ठ[7] महोदय । कोऽपि ते निधिरासीत् ।

**पुरुन्यासः**—देव । तस्य किल कीदृशो निधिरासीत् ।

**हेमलेखः**—कथम् ।

**एकैव दुहिता रम्या निधिस्तस्य न चापरः ।**
**यस्यां स किल मुग्धायां बभूवातीव वत्सलः ॥५१॥**

**पुरुन्यासः**—(स्वगतम्) इदानीमपि मे दुहितरमभिसन्दधाति ।

**हेमलेखः**—भो ज्येष्ठपाद । किमहं न सत्यं ब्रवीमि ।

---

१. तदाख्यो हास्याभिनेता नटः ।
२. शिरसा शप इति वक्तुरभिप्रायः ।
३. हेमलेखेन तु नटाः पुरुन्यासस्य शिरसा प्राप्ता इति गृहीतम् ।
४,५. सेनाकप्लुतासौ यथाक्रमं दुरन्तलघुनाट्यकारौ ।
६. तदाख्यो देशः ।
७. तदाख्यो पुरुषः ।

**पुरुन्यासः**——देव । यदि किल मां ज्येष्ठ इति ब्रवीषि सत्यमेव ममैका दुहितास्ति यस्यामहमतीव वत्सलः ।

**हेमलेखः**——न हि । नैतदायातं भवति ।

**पुरुन्यासः**——देव । तर्हि किमायातं भवति ।

**हेमलेखः**——कथम् ।

**यथैव हि फलेद्भाग्यं तथेश्वरो विधास्यति ।**

ततश्च यथा भवान् वेत्ति——

**यथा सम्भाव्यमेवैतत् प्रावर्त्तत तथैव हि ।।५२।।**

तदनुत्तमाया गाथायाः प्रथमः श्लोकस्तावदतोऽधिकं कथयिष्यति । पश्य । एते हि मे कथाविच्छेदहेतव इत एवाभिवर्त्तन्ते ।

(ततः प्रविशन्ति चत्वारः पञ्च वा नटाः ।)

स्वागतं वो माणवकाः । सर्वेभ्यः स्वागतम् । युष्मान् कुशलिनो दृष्ट्वाहं प्रीतोऽस्मि । स्वागतं वः प्रियसखाः । भोश्चिरसख । यदाहं त्वां चरमवारे दृष्टवानस्मि ततः प्रभृति त्वं श्मश्रुमान् संवृत्तः । अपि नाम त्वं दीनार्केऽस्मिन् मां श्मश्रुणि ग्रहीतुमागतोऽसि । अयि कन्ये । दयिते । अस्मद्देव्या[1] खल्वहं शपे यदाहं त्वां चरमवारे दृष्टवानस्मि ततः प्रभृत्यत्रभवती पादुकोच्छ्रायेण दिवः समीपतरवर्त्तिनी संवृत्तेति । ईश्वरकृपया तव कण्ठध्वनिरप्रचरितमुद्राखण्ड इव वलयमध्ये स्फुटितो मा भूत् । माणवकाः । सर्वेभ्यो वः स्वागतम् । वयं खलु प्रांशुदेशीयाः श्येनपालका इव दृश्यमात्रेऽभिपतामः । सद्य एव तावद् वचनं शृणुमः । एहि[2] । आत्मनो गुणप्रकर्षः प्रकाश्यताम् । एहि[2] । भावनिबद्धं वचनं तावदुदाह्रियताम् ।

**प्रथमो नटः**——देव । कतमद्वचनम् ।

---

१. मारीनाम्नेत्यर्थः ।

२. एकवचनमेकाभिप्रायम् ।

**हेमलेखः**——एकदा किल त्वयोदाहृतं वचनं मया श्रुतम् । तत्तु न कदापि प्रयोगेऽधिकृतम् । अविकृतं वा सकृदेव । न तत ऊर्द्धम् । यथाहं स्मरामि तद्रूपकन्तु न लोकस्य हृदयमाराधयामास । नहि जनेभ्यस्तत् स्वदते स्म । यथा तु मया तेषु तेषु मत्तोऽप्यधिकप्रमाणभूतैरपरैश्च गृहीतं तत् खलु दृश्येषु संविभक्तं स्वभावेन च पाटवेन च कृतमुत्तमं रूपकमासीत् । स्मरामि खलु तत्र कश्चिदाह पादेषु लोकरुचिरं चित्रवस्तु पदेषु च शब्दालङ्कारः कवेरवरत्वपिशुनो न प्रयुक्तः । तत्तु सर्वथा सौष्ठवान्वितं यथा सदर्थगह्वरं तथा मधुरमथ वैचित्र्यापेक्षया भूयसा रसवदेवासीदिति । तत्रैकस्मिन् वचने प्रायेण मम महती प्रीतिरासीत् । सा हि दीनां[1] प्रत्येणाक्षस्य[2] कथा यत्र विशेषेण प्रायामस्य[3] वधस्तेन गीयते । यदि त्वं स्मरसि पादादस्मादारभ्यताम् । कथयामि तावत् । कथयामि तावत् ।

**"पीडासः[4] किल दुर्मदो रणमुखे व्याघ्रेन्द्रविक्रीडितः——"**

नैतदेवम् । पीडासेनैवैतदारभ्यते ।

**"पीडासः किल दुर्मदोऽभिपतितः कालायसाभ्यामिव**
**बाहुभ्यामतिभीषणाकृतिरसौ कालाश्वगर्भा[5]श्रितः ।**
**कालास्त्रैर्बहुधा स्फुरद्भिरधिकं कालान्तकश्रीस्तदा**
**क्रूरात्मा घनकालरात्रिकुटिलः सर्वात्मनादीप्यत ॥५३॥**

**आशीर्षं चरणावधि स्रुतरसैरत्यर्थदिग्धीकृतो**
**वीराणां पितृपुत्रलक्षणजुषामस्त्रैः सभक्तिर्यथा ।**
**उच्चैर्भीमशिखैर्ज्वलद्भिरसकृत् कालाग्निभिस्तत्परं**
**दग्धेष्वध्वसु गाढमुष्मविधिना तैरेव पङ्कात्मभिः ॥५४॥**

**तेजोभिः परिदह्यमानहृदयः सन्दीपितैर्मन्युभिः**
**सन्दष्टैर्घनलोहितैरुपचितस्वव्यायतात्मा पुनः ।**

---

१.२.३.४. तदाख्याः पुरुषाः ।

५. दारुमयस्य बृहदश्वस्योदराभ्यन्तरे स्थिता ग्रीष्मवीरा श्छलेन परान् जघ्नुरिति वार्त्तानुसन्धेया ।

चक्षुर्भ्यामतिचण्डमूर्त्तिरिरिभिः सद्यः क्षताभ्यामिव
कालात्मा स्म पितामहं प्रवयसं प्रायामममन्विष्यति ॥५५॥"

ततो भवानुदीरयतु ।

पुरुन्यासः—देव । ईश्वरेण खलु शपे सुष्ठु खल्वेतद् भवताक्षरविभागेन स्वाच्छन्द्येन च समुदीरितम् ।

प्रथमो नटः—"आसाद्य प्रहरन्तमेनमसमं तैर्ग्रीष्म[1]वीराग्रगैर्हस्ताद् भ्रश्यति तस्य दुर्बलतया प्राचीनखड्गोत्तमे ।
भूपृष्ठे स्थितिमादधत्यविकलं तादृक्स्थितावेव स
पीडासो बलवान् बलेन रहितं प्रायाममभ्यापतत् ॥५६॥

संक्रुद्धः प्रजहार वैरिणि ततः खड्गेन चात्यायतं
खड्गस्यैव स मारुतेन महता भूमौ बलात्पातितः ।
हर्म्योऽपि ज्वलदग्रभूमिसुभगः शत्रोः स्फुरद्गात्रकस्तस्मादेव पपात तस्य विदधद् भीमं स्वनं श्रोत्रयोः ॥५७॥

खड्गोऽस्याभिपतन् शिरोऽतिपलितं तस्मिन् क्षणे वैरिणः
संसक्तः सहसा भियेव मरुतो मध्यावकाशे बभौ ।
पीडासोऽपि तदा हयोपरि निजैः सर्वेन्द्रियैर्निष्क्रियश्चित्रारम्भविनिश्चलं यम इव ध्यायन् स तस्थौ क्षणम् ॥५८॥

आकाशे स्तिमिते यथैव न चिराद् वात्यागमं शंसति
प्राग् वातैर्नुदिते पयोदपटले चित्रायमाणे पुरः ।
दिक्चक्रे च समन्ततः सपवने स्तब्धं स्थिते मृत्युवन्
निर्घोषः सहसा कुतोऽपि पतितः सर्वां दिशं दारयेत् ॥५९॥

स्वारम्भाय तथा क्षणात् पुनरसौ जिघांसया चोदितः
खड्गेनास्त्रविलिप्तदारुणमुखेनाभ्याहनद् वैरिणम् ।

---

१. तदाख्यो देशः ।

स्रष्टुः संहतभौमवर्मरचनारम्भे महामुद्गरो
ज्वालावर्षितयेव भीमपतितं खङ्गः स तत्रापतत् ॥६०॥

धिग्धिक् संसदि हर्त्तुमर्हथ सुराः संहत्य लक्ष्म्या बलं
यत्स्यात्तद्रथचक्रनेमिफलकं तत्रैव चारावली।
तद् भङ्क्त्वाथ दिवो महाद्रिवलयेनात्युच्चपार्श्वेन च
नाभिं निक्षिपत स्फुरद्गतिवशादद्यैव दैत्यालयम् ॥६१॥"

**पुरुन्यासः**—एतदत्यन्तदीर्घम् ।

**हेमलेखः**—तथा चेद् भवच्छ्मश्रुणा सह नापिताय गच्छेत् । अतः परमुदीरयितुमर्हसि । एष खलु गाथानृत्यं वा कथाबन्धं वाभिलषति । अथवा सुप्त एवैषः । कथय । हेतुकां[1] यावत् कथय ।

**प्रथमो नटः**—"को वा तन्महिषीं पिनद्धशिरसं तत्रांशुकैरैक्षत—"

**हेमलेखः**—कथमंशुकैः पिनद्धशिरसमिति ।

**पुरुन्यासः**—साध्विदमुक्तम् । अंशुकैः पिनद्धशिरसमिति साध्विदमुक्तम् ।

**प्रथमो नटः**—"भ्राम्यन्तीं गतपादुकां प्रशमनीं वह्नेरिवान्धाश्रुभि-
र्वस्त्रान्तोज्झितपार्थिवोचितलसत्सम्भाव्यचूडामणिम् ।
वह्नित्रासगृहीतमुग्धहृदयां वासो विहायात्मन-
स्तामापाण्डुरकम्बलावृततनुश्रीमच्चलन्मध्यमाम् ॥६२॥

भर्त्तुर्देहमवेक्ष्य सा च शतशः खड्गेन खण्डीकृतं
क्रूरेणारिवरेण मुक्तहृदयं चक्रन्द पर्य्याकुला ।
तामालोक्य तथाविधां विषरसेनेवार्द्रया जिह्वया
दैवद्रोहमुदीरयेत् किल जनस्तत्राभ्यसूयापरः ॥६३॥

देवास्ते यदि संहता नृपसुतां पश्येयुरार्त्तस्वनां
मर्त्यानां प्रतिपत्तिरार्द्रहृदयान् कुर्वीत चेदात्मनः ।
नूनं सा द्रवयेद् दिवि स्तुतिभराञ्ज्योतींषि भास्वन्त्यपि
कारुण्यात् प्रसमीक्ष्य तेषु बलवन्मन्युञ्च सन्दीपयेत् ॥६४॥"

---

१. तदाख्यां प्रायामस्य महिषीम् ।

**पुरुन्यासः**—पश्य। किं नायं विवर्णमुखः पर्य्यश्रुश्च संवृत्त इति। प्रसीद। विरम तावत्।

**हेमलेखः**—युज्यते। अचिरेण त्वां वृत्तशेषं वाचयामि। भद्र देव। किं तथा विधास्यति भवान् यथैते कुशीलवाः सुखस्थिता भवेयुरिति। किं शृणोति भवान्। एते खलु यत्नात् सम्भाव्यन्ताम्। एते हि काल-वृत्तान्तस्य सारप्रवक्तारो भवन्ति। वरं भवान् मरणादूर्द्धमप्रीतिकरीं चैत्यलिपिं लभेत न तु जीवन्नेतेषामश्रोत्रपेयां गाथां शृणुयात्।

**पुरुन्यासः**—देव। ते खलु मया यथार्हं सम्भावयिष्यन्ते।

**हेमलेखः**—भो माणवक। ईश्वरशरीरकेनाहं शपे ततोऽपि युक्ततरं सम्भावयितव्यम्। सर्वो जनश्चेद् यथार्हं सम्भावनीयः कस्तर्हि कशाताडनान्मुच्येत। आत्मनः खलु सम्भावनीयत्वस्य मनःसमुन्नतेश्च सदृशमेते सम्भाव्यन्ताम्। एतेषां हि यावता सम्भावनीयत्वमपहीयते तावता भवतो दाक्षिण्यगुणो वर्द्धते। यावदेतानन्तः प्रवेशयितुमर्हसि।

**पुरुन्यासः**—आर्य्याः। इतस्तावत्।

**हेमलेखः**—प्रियसखाः। यावदेनमनुगच्छत। श्वो वयं रूपकं द्रक्ष्यामः।

(निष्क्रान्तः पुरुन्यासः प्रथमं नटं वर्ज्जयित्वा शेषैः सह।)

भोश्चिरमित्र। किं मे शृणोति भवान्। कच्चिद् भवान् गुञ्जाङ्गवधं रूपकेन दर्शयितुं पारयति।

**प्रथमो नटः**—देव। अथ किम्।

**हेमलेखः**—श्वो रजन्यां वयमेतद् द्रक्ष्यामः। कच्चिद् भवान् प्रयोजनापेक्षितया मया विरचितं तत्र च सन्निवेशितं द्वादशपादात्मकं षोडशपादात्मकं वा वचनं कण्ठस्थं कर्तुं पारयति।

**प्रथमो नटः**—देव। अथ किम्।

**हेमलेखः**—तथास्तु। यावदेनं देवमनुगच्छ। पश्य। मैनमपहसितुमर्हथ यूयम्।

(निष्क्रान्तः प्रथमो नटः।)

प्रियसखौ[२]। आमन्त्रये वामद्य रात्रये। आलस्यनीडेऽस्मिन् स्वागतं वाम्।

**रुजाक्रान्तः**—भद्र देव।

---

१. तदाख्यः पुरुषः।
२. इत्यादि रुजाक्रान्तगूढास्तीर्णौ प्रति बोध्यम्।

**हेमलेखः**—अये । तदीश्वरो वां सहायो भवतु ।

(निष्क्रान्तौ रुजाक्रान्तगूढास्तीर्णौ ।)

अहमिदानीमेकान्तोऽस्मि । अहो किमपि दुर्वृत्तो नीचदासश्चास्मि । कुतः ।

**आश्चर्य्यं किल यन्नटोऽयमभितो भावैकतानः स्वय-**
**मात्मानं स चकार कल्पितकथासम्बोधनव्यापृतम् ।**
**पर्य्यश्रुः परिशुष्कदीनवदनो विक्षोभसम्पीडितो**
**भ्रश्यद्गद्गदया गिरा प्रतिपदं शोकात्मना भावितः ॥६५॥**

सर्वमेतद्धि कस्य कृते प्रवृत्तम् ।

**हेतुकायाः कृते यदि किंवा हेतुकया तयास्य साध्यम् ।**
**अनेन च हेतुकाया यदयं किलैनामनुशोचेत् ॥६६॥**

किञ्च । किं नु खल्वयं कुर्य्याद् यदि ममेवास्यापीदृशस्य बलवतोऽभिनिवेशस्य सङ्केतरूपं निमित्तं स्यात् ।

**नूनं सोऽभिनयेन लोचनजलै रङ्गालयं प्लावयेत्**
**सर्वेषां विकटार्थदीप्तवचनैः कर्णौ तथा दारयेत् ।**
**पापिष्ठानपि मादयेत् पुनरिमान् शुद्धात्मनो भीषये-**
**दज्ञांश्चैव विमोहयेदथ सतां वृत्तीश्च विष्टम्भयेत् ॥६७॥**

अहं पुन :—

**मन्दोऽस्मि वीर्य्यरहितः पुरुषाधमश्च**
**दुर्वासनोऽज्ञ इव कार्य्यविधानमूढः ।**
**अन्यायतोऽसुभिरपास्तधनस्य तस्य**
**राज्ञः कृतेऽपि वचनाय न वा समर्थः ॥६८॥**

**किंवा कापुरुषोऽस्मि को नु खलु मां दुर्वृत्तमापादयेद्**
**भिद्याच्चैव शिरो ममातिकलितं श्मश्रूणि चोन्मोचयेत् ।**

वक्त्रस्योपरि च क्षिपेदथ नसां हस्तेन चावर्त्तयेन्
मिथ्याभाषितयेव मामकरुणं वाच्येन चाधिक्षिपेत् ॥६९॥

हा को नु मामीदृशवर्णं कारयेत् । ईश्वरशोणितेनाहं शपे मया खल्वेतदङ्गीकार्य्यम् । एवमेतदेव । नान्यथा । तथाहि ।

निर्विण्णोऽहं ननु मृदुतया क्रूरवृत्तस्य शत्रो-
र्द्रोहस्यापि प्रतिकृतमलं नास्मि कर्त्तुं विमूढः ।
श्येनान् कुर्य्यां गगनपतितानन्यथा स्फीतकायान्
दासस्यास्य क्षपितवपुषोऽमेध्यमांसेन नूनम् ॥७०॥

क्रूरोऽतिक्रूरोऽयं दुर्वृत्तो विश्वासघातकश्च ।
निर्घृणश्च लम्पटश्च धूर्त्तश्चैवाप्राकृतश्च ॥७१॥

अहो वैरनिर्यातनं कथं नु कुर्य्याम् । ननु कथं बालेयोऽस्मि । कुतः ।

साधीयः किल वत्सलः पितुरहं यद् घातितस्यात्मजो
वैरस्य प्रतिमोचनाय नुदितो देवैश्च सत्त्वेन च ।
मन्योर्वेगमुदीरयेयमुदितैश्चण्डस्वभावा यथा
पण्यस्त्रीव शपेय हीनशपथैः पात्रस्य वा क्षालका ॥७२॥

धिगिदम् । अपेहि । बुद्धे । स्वकार्य्यसिद्धौ तावदात्मानं व्यापारय । श्रुतं खलु मया—

पापात्मनो हि सदसि प्रहिताभिलाषा
नाट्यस्य कूटविनिवेशितदृश्यभाजः ।
वस्तुप्रयोगविधिनैव तथाभिभूताः
सद्यो यथा स्वदुरितानि विघोषयन्ति ॥७३॥

कुतः । अतिनिभृतोऽपि हि वधो नूनमद्भुतोपायेनात्मानं प्रकाशयेत् । तेन ह्यहमेभिः कुशीलवैः पितृव्यस्य समक्षं पितुर्वधानुरूपव्यापारं रूपकं रूपयिष्यामि । ततोऽहं तस्य मुखवर्णं निर्वर्णयिष्यामि भावञ्च तावत् सम्परीक्षिष्ये । यद्यसौ नाम विकम्पेत मम पन्थास्तावदवस्थित एव । किञ्च ।

सत्त्वं किल मया दृष्टमपि नाम स साक्षात् पिशाचो भवेत् ।
पिशाचोऽपि वा कदाचिदनुकलं रूपं धारयेत् ॥७४॥

अपिच ।

निर्वेदान्मम मनसोऽथ दुर्बलत्वात्
सत्त्वं तद् विहितबलं हि मद्विधेषु ।
किं शश्वन्निरयनिवासलाभहेतोः
कष्टं मां कथमपि मोहयाम्बभूव ॥७५॥

एवं स्थिते--

तस्मादपि प्रेतनिदेशवाक्यात्
परं प्रमाणं मृगयेऽधिगन्तुम् ।
नाट्यञ्च तद्वस्तु नृपस्य भावो
यस्मिन् मया स्यादिव पाशबद्धः ॥७६॥

(निष्क्रान्तः ।)

इति द्वितीयं दृश्यम् ।

इति द्वितीयोऽङ्कः ।

# तृतीयोऽङ्कः ।

## प्रथमं दृश्यम् ।

दुर्गाभ्यन्तरस्थः कक्षः ।

(ततः प्रविशति राजा राज्ञी पुरुन्यास उपाला रुजाक्रान्तो गूढास्तीर्णश्च ।)

**राजा**—पृच्छामि खलु भवन्तौ—

**कथं न विज्ञातुमथापि शक्यते**
**कथाप्रसङ्गेन तदीयविभ्रमः ।**
**कथञ्च सोन्मादधियोऽतिबाह्यते**
**शमोपरोधी विषमोऽस्य वासरः ॥१॥**

**रुजाक्रान्तः**—स खलु सोन्मादमहमात्मानं जानामीति प्रतिपद्यते। कथमिति तु कथमपि न वक्ष्यति।

**गूढास्तीर्णः—विमूढभावस्य रहस्यवेदने**
**न वा कदाचिद् वचनोन्मुखो भवेत् ।**
**निदानवाक्याय स चोदितोऽपि सन्**
**विमोहदाक्ष्यान्निभृतञ्च तिष्ठति ॥२॥**

**राज्ञी**—किं युवां तेन यथोचितं सम्भावितौ ।

**रुजाक्रान्तः**—दाक्षिण्ययुक्तेन सम्भावितौ ।

**गूढास्तीर्णः**—किन्तु भूयांसमकाममाविष्कुर्वता सम्भावितौ ।

**रुजाक्रान्तः**—स हि स्वयं पृच्छामन्थरोऽप्यावयोः प्रतिवचनदानेऽतीव दक्षिणः ।

**राज्ञी**—किं तं विनोदविशेषे युवामाहूतवन्तौ ।

**रुजाक्रान्तः**—भवति । यथा चायातं केचन कुशीलवा अन्तरावाभ्यामतिक्रान्ताः। ते च तस्मै निवेदिताः। तच्छ्रुत्वा स प्रीतिमानिवासीत्। ते च

राजसभामभिवर्त्तन्ते। तर्कयामि तस्य समक्षमस्यां रजन्यां कस्यचिन्नाट्यस्य प्रयोगेऽधिकरणार्थमादिष्टपूर्वा इति।

**पुरुन्यासः**—अतीव खलु सत्यमेतत्। यथा च देवौ तद्वस्तु प्रत्यक्षीकरिष्यतस्तथात्रभवतोरनुनयार्थं वयं तेन प्रार्थिताः।

**राजा**—भद्रौ भद्रमुखौ।

**प्रीत्या वयं तदिह वस्तु विलोकयामः**
**श्रुत्वा तथाविधममुञ्च वितर्पिताः स्मः।**
**भूयोऽपि तेजयितुमर्हथ एवमेन-**
**मेवंविधेषु रमते स यथा प्रसन्नः ॥३॥**

**रुजाक्रान्तः**—देव। तथा।

(निष्क्रान्तौ रुजाक्रान्तगूढास्तीर्णौ।)

**राजा**—दयिते गर्त्तरुदे। त्वमप्यस्मानामन्त्रयस्व। हेमलेखस्तावदितः समुपसर्पणार्थं निभृतं सन्दिष्टो यथासौ दैवगत्येवेहोपाला सम्मुखमापतेत्। ततः।

**तातोऽस्याश्च वयञ्च गूढपुरुषौ भूत्वा पुनर्न्यायत-**
**स्तेनालक्षितविग्रहौ तमभितः संलक्षयन्तौ स्थितौ।**
**संवादेन तयोर्मुखाकृतिमुखेनैवञ्च जानीवहे**
**यद्यस्यां प्रणयेन वा यदि भवेत् सोऽन्येन वा पीडितः ॥४॥**

**राज्ञी**—तव निदेशे वर्त्तिष्ये। अथोपाले।

**भूयात्तवैव ललितावयवायतश्रीः**
**तस्याधुना मतिविपर्य्ययहेतुरेषा।**
**सम्भावितश्च हृदये निहितो गुणौघः**
**स्वास्थ्यं करोतु न चिरादिव राजसूनोः ॥५॥**

तदुभयोरपि वां गौरवाय कल्पेत।

**उपाला**—भवति। आशंसे तथैव भूयात्।

(निष्क्रान्ता राज्ञी ।)

**पुरुन्यासः**—उपाले । त्वमितो व्रज । महाभाग । प्रसीद । आवामपि यावदात्मानौ स्थापयावः । (उपालां प्रति) इदं पुस्तकं पठ । एतदुपासनविधिना त्वदीयमेकान्तत्वं व्यपदिश्येत । कुतः ।

**वयमेव गर्हणीया यत्प्रायेण खलु धर्मध्वजितया ।**
**पुण्यापदेशेन नः पापात्मतां निगहयामः ॥६॥**

**राजा**—(स्वगतम्) अहो । अत्यन्तं खलु सत्यमेतत् ।

**किमपि वचनादेतस्मान्मे मनः कशयाहतं**
**यदपि गणिकागण्डं चूर्णैः समर्पितलेपनम् ।**
**न हि बहुतरं लक्ष्म्या हीनं भवेत्तदपेक्षया**
**कपटवचनैश्छन्नप्रायं यथा मम दुष्कृतम् ॥७॥**

अहो भारवत्त्वं हृदयस्य ।

**पुरुन्यासः**—शृणोमि खलु स इत एवाभिवर्त्तते । देव । यावदावामपसरावः ।

(निष्क्रान्तो राजा पुरुन्यासश्च ।)

(ततः प्रविशति हेमलेखः ।)

**हेमलेखः**—**किं सत्त्वमथवासत्वमित्येष प्रश्ननिश्चयः ।**[1]

तथाहि ।

---

१. किं सत्त्वम् अथवा असत्त्वम् । किंसत्त्वम् अथवा सत्त्वम् इति वा च्छेदः । श्रेयः इति शेषः । किं सत्त्वम् अथवा सत्त्वम् इति विरोधाभासश्च । किञ्च । प्रश्नस्य निश्चयः प्रश्नश्चासौ निश्चयश्चेति समासः । इहान्यत्र चास्मिन्ननुवादग्रन्थे बह्वर्थगह्वरः सत्त्वशब्दो बहुशो गृहीतः । तस्यैवार्थभेदाश्रयेण पूर्वोक्तविरोधाभासस्य समाधानं प्रश्नभूतस्य वाक्यस्यास्योत्तरतापादनञ्चेति दिक् ।

किं श्रेयो यदि वा महत्त्वपिशुनं भूयिष्ठसत्त्वाश्रयात्
तीव्रायासशराभिघातसहनं प्रोच्चण्डभाग्यश्रियः ।
क्लेशाम्भोधितरङ्गराशिमपि वा संरुध्य सर्वात्मना
निःशेषक्षपणाच्चिरेण विजयश्रीलाभ एवार्थितः ॥८॥

अथवा मरणं श्रेयः स्वप्नमात्रमिव स्थितम् ॥९॥

यतः ।

स्वप्नेन चायतसुखेन विषादभारं
यत्नं विनैव हृदयस्य विनाशयामः ।
स्वाभाविकञ्च गुरुदुःखसहस्रमद्य
देहेषु नो भवति सैव हि सिद्धिरिष्टा ॥१०॥

तदिदं मरणं श्रेयः स्वप्नमात्रमिव स्थितम् ।
अथवा स्वप्नरूपेऽपि तत्र स्यात् स्वप्नदर्शनम् ॥११॥

अये । एतावतेदानीं कष्टमापतितम् । कुतः ।

स्वप्नात्मके हि मरणेऽसति देहबन्धे
स्वप्नेषु दृष्टमिव किं नु भविष्यतीति ।
तत्रापि नस्तनुभृतां बहु चिन्तनीयं
प्राणाश्चिरं सविपदोऽपि च रक्षणीयाः ॥१२॥

तथाहि ।

दुःखानि को वा विषहेत लोके
कालेन सावज्ञकशाहतानि ।
धर्मप्रहारिञ्च बलाधिकस्य
दर्पोद्घातात् प्राप्तविमाननाञ्च ॥१३॥

धर्माधिकारेऽपि विलम्बिकार्यं
प्रेम्णो व्यथाञ्चैव पराहतस्य ।

स्थानाधिकारेऽप्यकृतात्मबुद्धेः
पुंसो नियुक्तस्य मदप्रवृत्तिम् ।।१४।।

श्लाघ्यात्मनां नित्यपराभवञ्च
धैर्य्यस्वभावादसता प्रयुक्तम् ।
शान्ति लभेतापि यदा चिराय
सूचीमुखेनैव विधूय सत्त्वम् ।।१५।।

अपि च ।

वहेद् भारं को वा पशुरिव पुनर्जीवितमयं
दधत् कण्ठेनार्त्ति किमपि वपुषा स्वेदसलिलम् ।
परं मृत्योर्न स्याद् यदि तु भयमज्ञातविषय-
मदृष्टाद् यद्देशात् पुनरिह जनो नैति विचरन् ।।१६।।

एतदेव सुधियां धियं परं
मोहयत्यधिविनाशचिन्तनम् ।
अत्र साहयति च ध्रुवां रुज-
मन्यतः किल निवर्त्तयद् ध्रुवम् ।।१७।।

किञ्च ।

एवं नो विदधाति तामसमहो क्लैब्यं महच्चेतसः
सङ्कल्पश्च विषादबुद्धिकलया प्रच्याव्यते धर्मतः ।
प्रारम्भाश्च गुरुप्रकर्षपिशुना व्यावर्त्तितस्रोतसः
कार्य्याय प्रभवन्ति नैव महतामप्यस्तसत्त्वाश्चिरम् ।।१८।।

अये शान्तमिदानीम् । इयं खलु सुन्दर्युपाला । अयि । अप्सरः । तव खलु प्रार्थनासु मम पापानि स्मर्त्तव्यानि ।

**उपाला**—भद्र देव । कथं न्वेतावतो दिवसान् नयति देवः ।

**हेमलेखः**—प्रह्वस्य मे भवत्यै धन्यवादाः । स्वस्ति स्वस्ति स्वस्ति ।

**उपाला**—देव । अस्त्रि खलु मे भवतः प्रणयाभिज्ञानम् । तदहं चिरात् प्रतिग्राहयितुमैच्छम् । प्रसीद । तदिदानीमादातुमर्हसि ।

**हेमलेखः**—न हि । न खलु मया तुभ्यमभिज्ञानं विसृष्टम् ।

**उपाला**—महाभाग । जानाति खलु भवान् सत्यमेव विसृष्टवानिति ।

तेन च सार्द्धम्—

**भावेनार्द्रं तदपि मधुरं प्रीतिशब्दाभिधेयं**
**तेनैवेदं परिचितरसं ग्राहयामास मुग्धाम् ।**
**आदत्स्व त्वं व्रजति विलयं तत् पुनर्भावबन्धे**
**दातुर्दैन्ये भवति हि सतां दातृता लाघवाय ॥१६॥**

देव । तदिदमभिज्ञानम् ।

**हेमलेखः**—हा हा । किं साधुत्वे स्थिता त्वम् ।

**उपाला**—देव ।

**हेमलेखः**—किं रूपे स्थिता ।

**उपाला**—किं नु देवो मन्यते ।

**हेमलेखः**—यदि त्वं साधुत्वे रूपे च स्थिता तव साधुत्वं हि रूपस्थितया त्वया सह कस्यचित् सङ्गं न सोढुमर्हतीति ।

**उपाला**—देव । किं नु रूपस्य साधुत्वं विनापरेण सह संसर्गो भवितुमर्हति ।

**हेमलेखः**—अये । बाढम् । रूपस्य हि शक्तिः साधुत्वमन्यथैव सम्पादयेद् यथा साधुत्वस्य शक्तिः रूपमात्मानुरूपं कर्तुं न शक्नुयात् । एतत् खल्वेकदा रहस्यमिव मे प्रतिभाति स्म । अथ कालेनेदानीमेतस्य प्रमाणं दर्शितम् । त्वयि खलु मे भाव आसीत् ।

**उपाला**—देव । ननु तथैव विश्वासितास्मि ।

**हेमलेखः**—न खलु त्वया विश्वसनीयमासीत् । धर्मेण हि तथा नो मूलपातकं न संशोध्यं यथा न तत्स्पर्शोऽपि स्यादिति । न खलु त्वयि मे भाव आसीत् ।

**उपाला**—तथा चाधिकमहं विप्रलब्धास्मि ।

**हेमलेखः**—त्वं तावत् तपस्विनीमठं याहि । कथमन्यथा पापान् जनयिष्यसि । नन्वहमपि कथञ्चित् साधुत्वे स्थितः । तथाप्यात्मानं किल तादृशैरपराधैर्योजयानि यथा वरं जनन्या नाहं प्रसूत इति । अहं हि बलवत् स्तब्धो वैरप्रतिमोचनपरायण उत्सर्पिप्रार्थनश्चास्मि । मम हि सङ्केतितानि तावन्ति पापानि विद्यन्ते यावन्ति मया मनसा चिन्तयितुं बुद्ध्या भावयितुं कालेन च प्रतिकर्तुं न शक्यन्ते । किं नु खलु मादृशा

द्यावापृथिव्योरन्तराले सञ्चरन्तः साधयन्ति । मादृशानामेकस्मिन्नपि मा त्वं प्रत्ययमादधीथाः । सर्वे हि वयमत्यन्तधूर्त्ताः । तपस्विनीमठमेव तावत् शरणं व्रज । क्व ते पिता ।

**उपाला**—देव । गृहे ।

**हेमलेखः**—तद् गृहं तावद् रुद्धद्वारं कुरु यथासौ गृहादन्यत्र मा वालिशायताम् । आमन्त्रये त्वाम् ।

**उपाला**—अहो प्रियदैवतानि । यूयमेनं रक्षन्तु ।

**हेमलेखः**—अथ परिणेतुमिच्छसि तर्हि शुल्करूपमेतमभिशापं तेऽहं ददानि । तद् यथा ।

**हिमसंहतिरिव साध्वी भवेश्च शुद्धा तुषारस्रुतिरिव ।**
**तथापीह वचनीयादात्मानं न मोचयिष्यसि ॥२०॥**

तेन हि तपस्विनीमठं याहि । याहि । आमन्त्रये त्वाम् । अथवा चेदवश्यं परिणेतव्यं मूढमेव तावत् पतित्वे वरयस्व । विद्वांसो हि विदुर्युष्मद्विधाभिः कीदृशमद्भुतरूपत्वमापाद्यते तेषामिति । तपस्विनीमठमेव तावद् याहि शीघ्रं याहि । आमन्त्रये त्वाम् ।

**उपाला**—अहो समर्थानि दैवतानि । पर्य्यवस्थापयतैनम् ।

**हेमलेखः**—भूयस्तावद् युष्माकं पत्रावलीविरचनवृत्तान्तं श्रुतवानस्मि । ईश्वरेण हि भवतीनामेकरूपं मुखं कृतं भवत्यश्च तदन्यथैव कुर्वन्ति । भवत्यो हि मृदुनृत्यैश्चलन्ति वामगत्या चरन्ति सगद्गदश्ञ्च भाषन्ते । किञ्च । सर्वाणि भूतानि निन्दितैर्नामधेयैर्योजयन्ति । अज्ञानञ्चात्मनो विलासवत्त्वस्य शरणं मन्यन्ते । तद् याहि । नाहं पुनरेतत् सहिष्ये । एतेन तावदुन्मादितः संवृत्तोऽस्मि । न वयं भूयोऽपि विवाहमङ्गलानि द्रक्ष्याम इत्यहं ब्रवीमि ।

**ये पुनः कृतपरिणयास्ते जीवेयुरेकमेव विहाय ।**
**शेषा वर्त्तिष्यन्ते यथावस्थितमपापवृत्ताः ॥२१॥**

यावत् तपस्विनीमठमेव याहि ।

(निष्क्रान्तः ।)

**उपाला**—अहो किमपि महानात्मेदानीमेष हतः । तथाहि ।

योद्धुः खड्गवरः सभासु रसना विद्वत्सु वा दर्शनं
राष्ट्रस्यास्य नवञ्च पुष्पमथ तत्प्रत्याशया सन्निभः ।
लोकाचारविशेषदर्पणतलं चर्य्यापमानं तथा
द्रष्टॄणामपि चैकदृश्यमधुना सोऽयं कुमारो हतः ॥२२॥

किञ्च ।

अहमपि हतभाग्या कामिनीनां हतानां
मधुमयशपथानामार्द्रतां स्वादयन्ती ।
पटुतरमनसोऽस्य प्राज्यगम्भीरबुद्धे-
रथ खलु विहतां तां बुद्धिमालोकयामि ॥२३॥

अपि च ।

घण्टा यथा तानमृते निनादिता
रुक्षस्वना स्याद् विहता तथास्य धीः ।
पुष्पं परं पेशलयौवनाभिधं
सोन्मादभावेन तथैव विक्षतम् ॥२४॥

अहो ।

धिङ् माञ्च दृष्टसौभाग्यां साम्प्रतं मन्दभागिनीम् ।
यत्तथा दृष्टवत्यस्मि पश्यामि च तदन्यथा ॥२५॥

(ततः पुनः प्रविशति राजा पुरुन्यासश्च ।)

**राजा**—ननु किमनुराग इति । तस्याभिनिवेशस्तादृशो त दृश्यते । न च खलु तद्वचनं किञ्चिदव्यवस्थमपि सोन्मादभाव इवासीत् ।

अस्ति किञ्चिदस्य मनसि यदयं किल सविषादञ्चिन्तयति ।
नूनमेतत्प्रवृत्तिर्विपत्तिं कामपि सूचयति ॥२६॥

तन्निराकरणार्थमेव सद्यो मया विचिन्त्य स्थिरीकृतं स खलु क्षिप्रमुल्लण्डं[1] व्रजेदस्माकमुपेक्षितशुल्कसंग्रहायेति । ततः—

१. तदाख्यं देशम् ।

दिष्ट्या समुद्रतरणं रुचिरान् प्रदेशा-
नालोक्य यापि च रतिर्विविधेन्द्रियार्थान् ।
विस्मारयिष्यति मनोगतमेतदस्य
येनान्यथाकृत इव प्रतिभाति सोऽयम् ॥२७॥

किं वा भवान् मन्यते ।

**पुरुन्यासः**—साधु खल्विदं साधयेत् । तथापि तु मन्येऽवधीरितो भाव एवैतस्य विषादारम्भनिमित्तमिति । उपाले । त्वं कथमिदानीम् । देवो हेमलेखस्तु यदाह तदलं निवेद्य । सर्वं तदस्माभिः श्रुतमेव । देव । यद् भवते रोचते तद् विधीयताम् । यदि तु भवानुचितं मन्यते रूपकाभिनयादनन्तरमेकैव तस्य राज्ञी माता विषादनिमित्तख्यापनार्थमेनमनुनयतु । सा खलु सुव्यक्तमेनं पृच्छतु । अथ मामपि तयोः संवादश्रवणोचिते प्रदेशे स्थास्यन्तमनुमन्तुमर्हति देवः । एवमप्यस्य—

भावश्चेन्न ज्ञातस्तत उल्लण्डमेव प्रेषयैनम् ।
अथान्यत्र वा स्थापय यत् स्वमत्या मन्यते भवान् ॥२८॥

**राजा**—तत्तथा सम्पत्स्यते सोन्मादत्वं मनस्विपुरुषाणाम् ।
न हि निपुणमपरीक्षितं यथाप्रवृत्तमुपेक्षणीयम् ॥२९॥

(निष्क्रान्तौ ।)

इति प्रथमं दृश्यम् ।



## द्वितीयं दृश्यम् ।

तत्रैव बहिर्द्वारशाला ।

(ततः प्रविशति हेमलेखः कतिपयनटाश्च ।)

**हेमलेखः**—यूयं हि वाचं यथाहमुदीरितवांस्तथा रसनानिःस्यन्दितमिव समुदीरयितुमर्हथ । यदि तूच्चैःकण्ठेन तां निगदथ यथाहि बहव इदानीं नटा विदधति तदा वरमुत्क्रोशन्तो नगरवार्त्ताविघोषिणो वचांसि मे वाचयन्तु । किञ्च । न खल्वेवं हस्तेन वायुमतिमात्रं विदलयेत किन्तु मृदुतरं सञ्चारयेत । चेतोविकारस्य हि प्रवाहे चण्डवेगेऽथवा यथाहं ब्रूयां महावर्त्ते प्रसरत्यपि किमपि धैर्य्यं तावत् प्रतिपत्तुं दर्शयितुञ्चार्हथ येन तस्य श्लक्ष्णत्वमापाद्येत । अहो ये नाम भूमिस्थिताः प्रेक्षकाः प्रायेण दुर्बोधमूकाभिनयशब्दैकरसास्तेषामेव श्रुतिप्रमादनार्थमुच्चैः कण्ठेन कृत्रिमकेशवता नटेन सम्पाद्यमानमतिमात्रं खण्डानुखण्डशो भावविभेदनं दृष्ट्वा मम हृदयं विद्रूयते । अहं खलु तादृशं जनं तूर्णघण्ट[1]मप्यतिशायिनं कशया ताडयानि । एतावता स हीरद[2]मप्यतिहीरदायते । एतत् परिहर्त्तुमर्हथ ।

**प्रथमो नटः**—अत्र देवमाश्वासयामि ।

**हेमलेखः**—न वापि भूयसा मार्द्दवं भजेध्वम् । इह त्वात्मनो विवेकं प्रमाणीकुर्वीध्वम् ।

**वाचं कार्य्येण हि वः कार्यं पुनर्वाचा योजयेत ।**
**स्वभावस्य विशेषेण मात्रां न जातु लङ्घयेत ॥३०॥**

यतस्तथात्याचरितमभिनयस्य प्रयोजनमेव विपर्य्यासयेत् ।

**तस्य खलु प्रयोजनञ्चिरादारभ्य यदद्यापि सिद्धम् ।**
**निसर्गस्य दर्शनाय शुद्धदर्पणतलाभिरचनम् ॥३१॥**

---

१,२. एतौ प्रसिद्धौ चण्डौ नाट्यपुरुषौ ।

तथाहि ।

**धर्माधर्मादेः किल कालोचितजनवृत्तस्य सर्वशः ।**
**यथासत्त्वस्वरूपं तेन तदवस्थानुवर्णनम् ॥३२॥**

एतदत्याचरितमल्पाचरितं वा मूढमाराधयदप्यभिरूपमनुपीडयेद् यस्यैकस्यापि नामापरितोषः समग्रायाः परिषदो मत वः समतिशयीत । अहो सन्ति नाम कुशीलवा मया दृष्टप्रयोगाः श्रुतान्यक्तोच्चैः प्रशंसावचनाश्च ये क्रृष्टीयस्य मूर्त्तिपूजकस्येतरमनुष्यस्य वा कण्ठस्वरं गतिभेदं वा नानुकुर्वन्तस्तथा षण्डवत् परिक्रान्तवन्तो नर्दितवन्तश्च यथा तर्कयामि निसर्गलक्ष्म्या भृत्या एव मनुष्यं ससृजुरथापि न साधु ससृजुरिति धर्मविद्वेषेणाहं ब्रवीमि यथा ते मनुष्यसत्त्वं गर्हितं रूपयन्तीति ।

**प्रथमो नटः**—आर्य्य । प्रायेण वयमत्र विनिवृत्तदोषा इत्यहं मन्ये ।

**हेमलेखः**—मैवम् । कात्स्न्र्येन दोषं विनिवर्त्तयत । ये वो ग्राम्यजनमभिनयेयुर्न च तैर्यथोद्दिष्टवचनमतिक्रमणीयम् । ते हि मन्दबुद्धि जनं हासयितुं स्वयमनिमित्तं हसेयुर्यद्यपि तदा कश्चिद् गम्भीरार्थक्रमः प्राप्तः । एतद्-जघन्यम् । तादृशस्य बालिशस्य च शोचनीयां दुराकाङ्क्षां कथयति । तद् गच्छत । सज्जीभवत ।

(निष्क्रान्ता नटाः ।)

(ततः प्रविशति पुरुन्यासो रुजाक्रान्तो गूढास्तीर्णश्च ।)

देव । कथमिदानीम् । किमेनं प्रयोगं द्रक्ष्यति राजा ।

**पुरुन्यासः**—राज्ञी खल्वपि । तञ्च पुनरविलम्बितं द्रक्ष्यतः ।

**हेमलेखः**—तेन हि कुशीलवांस्त्वरयतु भवान् ।

(निष्क्रान्तः पुरुन्यासः ।)

किं भवन्तावप्यत्र सहायौ भविष्यतः ।

**रुजाक्रान्तगूढास्तीर्णौ**—देव । तथा ।

(निष्क्रान्तौ रुजाक्रान्तगूढास्तीर्णौ ।)

**हेमलेखः**—अयि भो होरास्य ।

(ततः प्रविशति होरास्यः ।)

**होरास्यः**—प्रिय देव । अयमस्मि तव निदेशे वर्त्तमानः ।
**हेमलेखः**—होरास्य । मया खलु संवादप्रसङ्गेन प्राप्तेषु पुरुषेषु त्वमेव विश्रम्भपात्रम् ।
**होरास्यः**—अहो नु प्रिय देव—
**हेमलेखः**—मा मैवम् । न खल्वयं चाटुवादः । कुतः ।

**किं वा समाशास्यमनन्यलाभं**
**त्वत्त्वो दरिद्रात् प्रतिपद्यतां मे ।**
**ऋते त्वदीयं स्थिरसाधुभावं**
**लोके शरीरस्थितिसाधनं यत् ॥३३॥**

कुतो नु दरिद्राः प्रसादयितव्याः । न हि ।

**आहार्य्यैर्मधुरवचोभिरार्द्ररूपान्**
**दुर्ग्राहस्वमदभरान् प्रसाधयन्तु ।**
**जानुभ्यामपि च महीं व्रजन्तु लोला**
**लाभश्चेत् प्रणयिषु तत्र निश्चितार्थः ॥३४॥**

किं शृणोति भवान् ।

**यतः प्रभृत्याहितबुद्धिसम्पदा**
**मनुष्यचारित्र्यविवेकलक्षणम् ।**
**समीक्षितं ज्योतिरमूढमात्मना**
**स्वयंवृतो मेऽसि तदैव बान्धवः ॥३५॥**

यतः ।

**त्वमेव तावत् सुखदुःखयोः समः**
**श्रियः प्रसादायतकोपवृत्तयोः ।**
**महान्ति दुःखान्यनुभूय संस्थितः**
**प्रबाध्यमानोऽपि न तैः प्रबाधितः ॥३६॥**

धन्या हि ते सुमनसः समतां प्रपन्ना
भावे च बुद्धिविभवे च परस्परेण ।
भाग्यश्रियः करधृतस्फुटवेणुतुल्यां
यद् वाद्यतां न किल यान्ति विचित्ररागम् ॥३७॥

ननु दर्शय मेऽद्य तं पुमांसं
न भजेद् यो धृतिमान् स्वभावदास्यम् ।
तमहं हृदये दधामि धीरं
प्रियमन्तर्हृदयं यथा भवन्तम् ॥३८॥

तदेतत् किमप्यतिमात्रमाहितम् । अद्य खलु रजन्यां राज्ञः समक्षं किमपि रूपकं रूपयिष्यते यत्रैकदृश्य मदुक्तपितृवधोपायेन सदृशवृत्तं भविष्यति । प्रसीद । यदा तद्वृत्तं प्रयुज्यमानं पश्यसि तदा त्वं सर्वात्मना मम पितृव्यं निरूपयितु मर्हसि ।

तस्मिन् मदीयवचनेन निगूढवृत्तो
दोषोऽस्य न स्फुरति चेत् सहसा प्रकाशः ।
पापाशयन्तु तमवेहि निगूढसत्त्व-
माग्नेयवेदिविकटञ्च ममापि तर्कम् ॥३९॥

ततः—

लक्षय त्वमस्य भावमहमपि लक्षयाम्यनन्यदर्शनः ।
पश्चादावां विमृष्य परीक्षिष्यावहे नौ मतम् ॥४०॥

**होरास्यः**—ननु देव ।

यदि नाम स गोपायति किञ्चिदपि रूपके प्रयुज्यमाने ।
न च मया परिज्ञातं तदा त्वं मां दण्डयिष्यसि ॥४१॥

**हेमलेखः**—एते ते रूपकं प्रेक्षितुमित एवाभिवर्त्तन्ते । यावदहमपि निर्व्यापार इव स्थास्यामि । त्वमप्यासनं प्रतिपद्यस्व ।

(दीनार्कसैनिकयात्रा । तूर्य्यनिर्घोषश्च समुच्चरति । ततः प्रविशति राजा राज्ञी पुरुन्यास उपाला रुजाक्रान्तो गूढास्तीर्णश्च सहेतरैः ।)

**राजा**—भ्रातृज हेमलेख । कथं नु वर्त्तते भवान् ।

**हेमलेखः**—शोभना खलु मे वृत्तिः । प्रतिसूर्य्य इव वायुना बह्वाश्वासवचनेन सन्तर्पितोऽस्मि । न हि कुक्कुटमेवं भोजयितुं पारयति भवान् ।

**राजा**—हेमलेख । किमनेन मे प्रतिवाक्येन । इमानि ते पदाक्षराणि न खलु मदीयानि भवन्ति ।

**हेमलेखः**—न खल्विदानीं मदीयान्यपि । (पुरुन्यासं प्रति) देव । ननु भवानेकदा विश्वविद्यालये रूपकाभिनयं कृतवान् ।

**पुरुन्यासः**—देव । तथाहं कृतवान् । शोभनो नट इति च परिगृहीतः ।

**हेमलेखः**—कस्य च पात्रस्याभिनयं कृतवान् ।

**पुरुन्यासः**—ज्वालास्यसीसारस्याभिनयं कृतवान् । तथा चाहं यूपतारप्रासादे[१] व्रतासेन[२] निहतः ।

**हेमलेखः**—तत्र खलु तादृशस्य गोवत्सोत्तमस्य निहनने तेनात्मनो महर्द्धिसाव्रतं दर्शितम् । अपि नाम कुशीलवाः सज्जाः स्युः ।

**रुजाक्रान्तः**—देव । अथ किम् । ते खलु भवत्प्रसादं प्रतीक्षन्ते ।

**राज्ञी**—वत्स हेमलेख । एहि मम पार्श्वं उपविश ।

**हेमलेखः**—भद्रे मातः । नहि । इहैषायस्कान्तशलाका महद्विलोभनहेतुः ।

(उपालापादयोः शयनं नाटयति ।)

**पुरुन्यासः**—(राजानं प्रति) अयि भोः । किमेतद् लक्षयति भवान् ।

**हेमलेखः**—भद्रे । किं तवोत्सङ्गे शयिष्ये ।

**उपाला**—देव । न हि ।

**हेमलेखः**—तवोत्सङ्गे मम शिरो निधायेत्यहं ब्रवीमि ।

**उपाला**—देव । अथ किम् । देव । प्रमुदितः खलु भवान् ।

**हेमलेखः**—क इव । अपि नामाहम् ।

**उपाला**—देव । अथ किम् ।

**हेमलेखः**—हा ईश्वर । अहमेवैको वो लघुनृत्यप्रहासकः । किं वा पुरुषः

---

१. तदाख्यस्य देवस्य प्रासादे ।
२. तदाख्येन पुरुषेण ।

कुर्य्याद् यदि न प्रमुदितः स्यात् । ननु पश्य कीदृशी प्रमुदिता मम माता दृश्यते । यद्यपि मे तातो दिनांशद्वयमात्रमुपरतः ।

**उपाला**—देव । न हि । द्वे मासद्वये स प्रयातः ।

**हेमलेखः**—किमेतावच्चिरम् । न हि । तदा पिशाच एवैकः कृष्णाम्बरं परिदधातु । अहं तावत् कालगुणमयं वासो धारयिष्यामि । अहो देवाः ।

**मासयोर्द्वयमपि मृतः स हि मे तातो न तावद् विस्मृतः ।**
**आशास्मे महत्स्मृतिर्यदि षड्मासान् जीवेदिति ॥४२॥**

परन्तु नो देव्या नाम्नाहं ब्रवीमि तेन खलु महाजनेन तदर्थं धर्ममन्दिराण्यवश्यं निर्मातव्यानि । अन्यथासौ स क्रीडाश्व इव विस्मृतिमियाद् यस्य किल चैत्यलिपिरहो दुःखमहो दुःखं क्रीडाश्वः स हि विस्मृत इति ।

(बृहद्वंशा वाद्यन्ते । मूकाभिनयश्चारभ्यते ।)

(ततः प्रविशति कश्चिद् राजा राज्ञी चातीव प्रीतिमन्तौ परस्परञ्च परिष्वजमानौ । सा जानुभ्यां भूमिं गता तस्मै गाढमनुरागं रूपयति । स तामुत्थाप्य तस्याः कण्ठे शिरो निदधाति । ततः पुष्पशय्यामधिशेते । सा च तं सुप्तं दृष्ट्वा विसृजति । अथ कश्चित् पुरुषः प्रविश्य राज्ञः किरीटमपहृत्य तच्चुम्बति । तस्य कर्णयोश्च विषं निषिच्य निष्क्रामति । राज्ञी प्रत्यावृत्ता राजानं मृतमालोक्य बहु विलपति । विषदश्च द्वित्रैर्मूकपरिदेवकैः सहितस्तया सह विलपितुमिव पुनरागच्छति । शवोऽपबाह्यते । विषदो राज्ञीमुपचारैराराधयति । सा तु कियच्चिरमनिच्छन्ती पश्चादस्य प्रणयं प्रतिपद्यते ।)

(निष्क्रान्ताः ।)

**उपाला**—देव । किं नु खल्विदं सूचयति ।

**हेमलेखः**—अये अहं ब्रवीमीदं खलु दुरितमन्तरितं भवति । इदमपचरितं सूचयति ।

**उपाला**—अनेन किलाभिनयेन रूपकवस्तूपक्षिप्तम् ।

(ततः प्रविशति सूत्रधारः ।)

**हेमलेखः**—अनेन ज्ञास्यामः । कुशीलवा हि मन्त्रं रक्षितुं न पारयन्ति । ते खलु सर्वं कथयिष्यन्ति ।

**उपाला**—किमयं कथयिष्यति किमनेनाभिनयेन सूचितमिति ।

**हेमलेखः**—अथ किम् । अथवा त्वयाभिदर्शितं यं कञ्चनाभिनयं कथयिष्यति ।

**उपाला**—विप्रतीपोऽसि त्वम् । विप्रतीपोऽसि त्वम् । यावदहं रूपकं लक्षयिष्यामि ।

**सूत्रधारः**—

माहृशेषु दाक्षिण्याद् दुरन्ताभिनये चापि बहुमानात् ।
शृणुत नाट्यमवधानात् सानुक्रोशविचारणाय ॥४३॥

**हेमलेखः**—किमियं प्रस्तावना । अथवाङ्गुरीयकलेख एषः ।

**उपाला**—देव । इयं खलु संक्षिप्ता ।

**हेमलेखः**—प्रमदाप्रणय इव ।

(ततः प्रविशति कश्चिद् राजा राज्ञी च ।)

**रूपकस्थो राजा**—

त्रिंशद्वारमसौ विरोचनरथः प्राचेतसं व्यायतं
क्षारोम्भोनिधिमत्यवर्त्तत शनैश्चक्रञ्च पृथ्वीश्रियः ।
त्रिंशद्द्वादशवारमाहृतकरैस्तावन्त एवेन्दवः
प्रेम्णा नौ हृदयं प्रजाधिपतिना यावत् करौ सङ्गतौ ॥४४॥[1]

**रूपकस्था राज्ञी**—

यावत् प्राणविसर्ज्जनान्न किल नौ प्रेम्णो भवेत्संक्षयः
सूर्य्याचन्द्रमसौ मुहुर्विचरतां तावत्पुनः शाश्वतौ ।
हा दिष्टं बलवत्प्रबाधिततनुस्त्वं मे चिराल्लक्ष्यसे
लुप्तश्रीरनतिप्रसन्नवदनो येनास्मि पर्य्याकुला ॥४५॥

---

१. एतत् पद्यमारभ्य ६० तमपद्यपर्यन्तं मूलानुसारेण साभिप्रायं तत्र तत्र किञ्चिदिव क्लिष्टतादोषयुक्त मापादितम् । एवं प्रागग्रेऽपिच बोद्धव्यम् ।

त्वामुद्दिश्य यदप्यहीनचरिता देवास्मि पर्य्याकुला
सौहार्द्देन भवानहो मम कृते नोद्वेगमायात् स्वयम् ।
भावं स्त्रीषु भयञ्च विद्धि तुलयान्योऽन्यं समानं यत
एकस्मिन्नसति प्रियापरमसद् भूयश्च भूयस्यपि ।।४६।।

भावो मे त्वयि कीदृशोऽस्ति तदभिज्ञोऽसि त्वमद्य स्थिरं
यावद् भावबलं भयञ्च बलवत् तावत् सखे गण्यताम् ।
भावश्चेद् दृढबन्धनो जनयति स्वल्पाद् द्रढिष्ठं भयं
स्वल्पाश्चेत् सुमहद् भयं प्रकथयेद् भावे महद् गौरवम् ।।४७।।

रूपकस्थो राजा--

सत्यं भो दयिते चिराय भवतीमामन्त्रयेऽहं पुरा
प्राणा मे सममिन्द्रियैश्च्युतबला मन्दायमानक्रियाः ।
रम्येऽस्मिन् जगति त्वमेव परतो जीविष्यसि प्रेयसि
सर्वेषाञ्च मता पतिञ्च सदृशं दैवक्रमेणागतम्--।।४८।।

रूपकस्था राज्ञी—

शान्तं पापमहो न वक्तुमुचितं यद् वक्ष्यमाणं त्वया
तादृक् प्रेम ममाविशेद् यदि मनस्त्वत्प्रेमघातो भवेत् ।
भर्त्तारञ्च परं लभेय भवतो धिङ्मां पुरोभागिनीं
हत्वा न प्रथमं कदापि न परं कान्तं लभन्ते स्त्रियः ।।४९।।

हेमलेखः—(स्वगतम्) विषौषधिः खल्वियम्[१] । विषौषधिः खल्वियम्[१] ।

रूपकस्था राज्ञी—

उद्बाहस्य परस्य हेतुरधिकं वित्तादिलाभो मतो
हीनार्थग्रथितः क्वचिन्न घटते भावाधिकप्राप्तये ।

---

१. स्त्री वागिति वा शेषः ।

भर्त्ता मां शयने परो यदि रसाद् भूयः प्रचुम्बेत् स्त्रियं
भर्त्तारं हृदये भवन्तमपरं भूयोऽपि हन्यामहम् ॥५०॥

रूपकस्थो राजा—

जानेऽहं यदिदं ब्रवीषि वचनं सत्यं हि तन्नान्यथा
सङ्कल्पः खलु नः क्वचिद् बलवतामप्यन्यथा साध्यते ।
दासोऽयं सततं स्मृतेरविकलश्चेतःप्रसूतः स्वय-
मुत्पत्तौ बलवान् स्वकार्य्यकरणे दौर्बल्यमापाद्यते ॥५१॥

सङ्कल्पो हि फलं यथाऽपरिणतञ्चेतस्तरौ भासते
प्रौढः सन् विनिपात्यते स्वयमधो बन्धस्य मूलक्षये ।
देयस्य प्रतिदेयवस्तुहरणे सङ्कल्पसिद्धौ तथा
प्रायेण स्मृतिहानिरात्मनि चिराल्लक्ष्ये समालक्ष्यते ॥५२॥

भावेनापि बलीयसा प्रविहिते सङ्कल्प एवात्मनि
भावस्यैव विपर्य्यये किल भवेत् सङ्कल्पहानिर्द्रुतम् ।
हर्षस्यैव सदा बलं बलवतः शोकस्य चात्यायतं
सङ्कल्पञ्च विनाशयेत् सह पुनर्हर्षञ्च शोकञ्च तम् ॥५३॥

हर्षश्चेद् बलवांस्तदा तु बलवान् शोकोऽपि तादृङ् मतः
शोको हर्षवदल्पकारणवशाद् हर्षोऽपि शोकायते ।
नाश्चर्य्यं किल यत्पुनर्जगदिदं शश्वन्न हि स्थास्यति
भावोऽपि प्रलयं मनुष्यविहितो भाग्यक्षये यास्यति ॥५४॥

भावो भाग्यबलाद् बलाधिकतरो भाग्यं बलीयोऽथवा
तत्त्वं तावदिदं प्रमाणनिचयैरास्ते परीक्षास्पदम् ।
सन्तं पश्यतु भाग्यहीनमचिरान्मित्रैर्विसृष्टं निजै-
र्भूयिष्ठैरनुबद्धसख्यमरिभिर्नीचञ्च भाग्यान्वितम् ॥५५॥

भाग्यस्यैव वशे स्थितं विगणयेर्भावं मनस्याहितं
मित्रैर्यस्य न हि प्रयोजनमहो मित्राणि तस्यैव हि ।

दैन्यस्थो यदि मित्रमिच्छति तदा मिथ्यैव मित्रं भवेन्
मिथ्यामित्रमदः पुनः खलतया तेनाप्यमित्रायते ।।५६।।

संघट्टोऽयमुपस्थितः प्रतिजनं दैवात्मसङ्कल्पयोः
सङ्कल्पाहितयत्नराशिरपि नो व्याहन्यते भूरिशः ।
सङ्कल्पोऽस्मदधीनजन्मविषयः कार्य्यं न तादृक् स्थितं
क्षीणेऽस्मिन् मयि हन्त तेऽपि कुशलो भावः क्षयं यास्यति ।।५७।।

रूपकस्था राज्ञी—

अन्नं मे पृथिवी चिराय हरतु ज्योतिः पुनर्द्यौरियं
संक्रीडा सुखदा च नश्यतु दिवा शान्तिश्च रात्रौ परा ।
विश्रम्भोऽपि सहाशया प्रविलयं शीघ्रं स्वयं यास्यतु
मा भूद् बन्दिगृहे तपस्विवसतेरन्यच्च दिष्टं मम ।।५८।।

आनन्दस्य विरोधि तत्क्षतिकरञ्चायासमात्रं पुन-
राशास्यं निखिलं विनाशयतु मे संस्पर्धया वर्द्धितम् ।
शश्वद् विप्रतिपत्तिराश्रयतु मां भावेष्विहामुत्र च
भूत्वाहं मृतभर्तृका यदि परं कान्तं लभेय ध्रुवम् ।।५९।।

हेमलेखः—यदि नामेयमिदानीं शपथं भिद्यात् ।

रूपकस्थो राजा—

गाढं शप्तमयि प्रिये विमनसं मां त्यक्तुमर्हस्यलं
कष्टं नोदयितुं दिनान्तमचिरादिच्छाम्यहं निद्रया ।

(स्वपिति ।)

रूपकस्था राज्ञी—

निद्रा लालयतु प्रियार्भकमिव त्वामात्मनः संश्रितं
दुर्दैवञ्च कदापि नापततु नावन्योऽन्ययोर्दारुणम् ।।६०।।

(निष्क्रान्ता ।)

**हेमलेखः**—भद्रे। कथं नु रूपकमिदं रोचयति भवती।
**राज्ञी**—तर्कयाम्येषा खल्वतिमात्रं शपते।
**हेमलेखः**—अये। एषा खल्वात्मनः शपथं पालयिष्यति।
**राजा**—किमस्य वस्तु श्रुतवानसि। किमत्र न कश्चिद् दोषो वर्त्तते।
**हेमलेखः**—न हि। न हि। एते हि केवलं परिहसन्ति परिहासपूर्वञ्च विषं प्रददति। न खल्वत्र कोऽपि दोषो मन्तव्यः।
**राजा**—किं नामधेयमेतद्रूपकम्।
**हेमलेखः**—मूषिककूटमिति। अये कथमिति चेद् वक्रोक्त्यैवमुच्यते। भिन्नायां[1] किल विहितस्य वधस्य रूपकमेतन्नाट्यम्। गुञ्जाग इति देवस्य नाम। तस्य पत्नी च पापिष्ठेति[2]। झटित्येव द्रक्ष्यति भवान् सकूटमेतद्वृत्तमिति। किन्तु किमनेन नो वृत्तेन। महाराजश्च वयञ्च ये नाम शुद्धात्मानस्तानस्मानेतन्न स्पृशति। क्षतचर्मा कदश्वो ननु विकम्पताम्। अस्माकमंसस्त्वक्षत एव।

(ततः प्रविशति रोषन्यासः।)

एष खलु रोषन्यासनामा राज्ञो भ्रातृजः।
**उपाला**—देव। साधु भवानत्र सूत्रधारः।
**हेमलेखः**—यदि नामाहं दारुपुत्रौ विलसन्तावपश्यं तव च त्वदीयप्रणयिनश्च सूत्रधारो भवेयम्।
**उपाला**—देव। तीक्ष्णः खलु भवान्। तीक्ष्णः खलु भवान्।
**हेमलेखः**—उपक्रमस्व रे घातक। त्यजात्मनो विगर्हितं मुखविकारम्। एहि। उपक्रमस्व। गृध्रोऽयं प्रविरौति भैरवपदं जिघांसया चोदित इति।

**रोषन्यासः**—पापात्मा पटुहस्तवृत्तिरुचितप्राज्यौषधः कालवान्
संप्राप्तोऽस्मि यथावकाशमधुना स्थानञ्च निर्मक्षिकम्।
व्यामिश्रं तदिदं[3] विषौषधिरसं यत्कालकूटाभिधं
यामिन्याः किल याममध्यसमये घोरे मया संभृतम्॥६१॥

चामुण्डापि च या करालवदना मायाविनां देवता
तन्नाम्ना त्रिरभिप्रदूषितमतस्त्रिः प्राप्तघोरक्रियम्।

---

१. तदाख्यायां नगर्याम्।
२ तदाख्या।
३. इति विशेष्यम्।

तैस्तैरात्मगुणैश्च दारुणफलैस्तस्माच्च मायाबलात्
प्राणानस्य हर प्रसह्य बलितं क्षिप्रं समर्थौजसः ।।६२।।

(सुप्तस्य कर्णयोर्विषं निषिञ्चति ।)

**हेमलेखः**--स हि तस्याधिकारलाभार्थमुपवने तस्मै विषं प्रददाति । तस्य नाम च गुञ्जाग इति । इयञ्च कथा प्रचरन्ती प्रशस्तयेतालीय[1]भाषया लिखिता । झटित्येव द्रक्ष्यति भवान् कथमसौ घातको गुञ्जागपत्न्याः प्रणयं लप्स्यत इति ।

**उपाला**—उत्तिष्ठति खलु राजा ।

**हेमलेखः**--कथम् । मिथ्याग्निभयेन भीतः ।

**राज्ञी**--कथं नु देवः ।

**पुरुन्यासः**—अलं पुनर्नाट्याभिनयेन ।

**राजा**--ज्योतिस्तावदुपनीयताम् । एहि । साधयामः ।

**सर्वे**--ज्योतिर्ज्योतिर्ज्योतिः ।

(हेमलेखहोरास्य वर्ज्जं निष्क्रान्ताः सर्वे ।)

**हेमलेखः**--**विलपतु बहु तावद् भिन्नमर्मा कुरङ्गो**
**विलसतु च यथेच्छं सायकैरक्षताङ्गः ।**
**भवतु च निशि कश्चित् सन्ततं जागरूको**
**ननु सुखशयितोऽन्यो लोकयात्रा तथैव ।।६३।।**

आर्य्य । यदि नाम मम विभवशेषविपर्य्ययः स्यात् कच्चिद् रूपकमेतदथ नेपथ्याय महान् पक्षराशिरुच्छिन्नपादुकान्यस्तेन परार्द्ध्यपाटलपुष्पद्वयेन समन्वितो रङ्गाजीवसंहतौ मम सहभागित्वमुपपादयेतामार्य्य ।

**होरास्यः**--अर्धभागित्वं कुर्य्याताम् ।

**हेमलेखः**—पूर्णभागित्वमित्याशास्मे ।

**प्रियसख तदिदं मे विद्धि पार्थोपम त्वं**
**परिमुषितमहेन्द्रं राज्यमेतत् समृद्धम् ।**

---

१. तदाख्यया भाषया ।

**अथ खलु विषयेऽस्मिन् राजते राजसंज्ञः**
**स्वयमिव मदमत्तः कामचारी मयूरः ॥६४॥**

**होरास्यः**—इह भवानन्त्यानुप्रासं[1] कर्त्तुं शक्नुयात् ।

**हेमलेखः**—अयि भद्र होरास्य । मुद्रासहस्रेणाप्यहं प्रतिजाने तस्य सत्त्वस्य वचनं भूतार्थ एवेति । किं लक्षितवानसि त्वम् ।

**होरास्यः**—देव । सुष्ठु ।

**हेमलेखः**—किं विषकथाप्रसङ्गेन यद् वृत्तमिति ।

**होरास्यः**—सुष्ठ खलु तं लक्षितवानस्मि ।

**हेमलेखः**—आः । हा । सङ्गीतकं तावदस्तु । वेणुवादकास्तावत् ।

**यदि नाम महाराजो नाट्यं न द्रष्टुमिच्छति ।**
**ईश्वरेण शपे सोऽसौ नैव तद् द्रष्टुमिच्छति ॥६५॥**

सङ्गीतकं तावदस्तु ।

(ततः पुनः प्रविशति रुजाक्रान्तो गूढास्तीर्णश्च ।)

**गूढास्तीर्णः**—भद्र देव । मह्यं किञ्चिद्वचनावसरं दातुमर्हति भवान् ।

**हेमलेखः**—आर्य्य । समग्रेतिवृत्तस्यावसरमिति कथय ।

**गूढास्तीर्णः**—आर्य्य । महाराजः खलु—

**हेमलेखः**—अये । आर्य्य । किं तस्य वृत्तम् ।

**गूढास्तीर्णः**—स हि यावदितः प्रतिनिवृत्तस्तावद् बलवदस्वस्थो दृश्यते ।

**हेमलेखः**—आर्य्य । किं सुरापानेन ।

**गूढास्तीर्णः**—देव । न हि । विकारेण ।

**हेमलेखः**—अत्र खलु तस्य वैद्यायेमं वृत्तान्तं निवेद्य त्वमात्मनो बुद्धिमत्त्वं दर्शयितुमर्हसि । ननु मया तस्मै प्रयुक्तात्मशुद्धिस्तमधिकं विकारयिष्यति ।

**गूढास्तीर्णः**—भद्र देव । आत्मनो वचनं तावत् संस्थापय । मा खलु मत्प्रस्तावं विषमं लङ्घय ।

---

१. पूर्वश्लोके मयूर इत्यस्य स्थाने खराङ्ग इति पठित्वेति भावः । खराङ्गपदञ्च खरस्याङ्गमिवाङ्गं यस्येति साधनीयम् ।

**हेमलेखः**—आर्य्य । समोऽस्मि । उदाह्रियताम् ।

**गूढास्तीर्णः**—तव खलु देवी माता बलवत्पीड्यमानहृदया मां त्वत्सकाशं प्रेषितवती ।

**हेमलेखः**—स्वागतं भवते ।

**गूढास्तीर्णः**—मा मैवम् । भद्र देव । नायमुपचारो युज्यते । यदि भवानत्र युक्तमुत्तरं दास्यति भवतो मातुः सन्देशं तावद् निवेदयिष्यामः । न चेद् भवताभ्यनुज्ञातेन नः प्रतिनिवर्त्तनेन कार्य्यस्यान्तं भविष्यति ।

**हेमलेखः**—आर्य्य । न खल्वहं पारयामि ।

**गूढास्तीर्णः**—देव । किमिति ।

**हेमलेख**:—युक्तमुत्तरं भवते दातुमिति । अहं ह्यातुरबुद्धिरस्मि । किन्त्वार्य्य भवतेऽथवा यथा त्वमात्थ मम मात्रे यथाशक्ति प्रतिवचनं दास्ये । तदलं बहुना । अथ प्रकृतमधिकृत्य यथा त्वमात्थ मम खलु माता—

**रुजाक्रान्तः**—ततो ह्येवं साह तव खलु वृत्तेन ममात्मा परमविस्मयपदमुपनीत इति ।

**हेमलेखः**—अहो नु विस्मयमय पुत्र यो ह्येवं मातुर्विस्मयमादधीत । किं मातुरस्य विस्मयस्यानुपदं किंचन वृत्तं न विद्यते । तन्निवेद्यताम् ।

**रुजाक्रान्तः**—सा खलु यावद् भवान् न शयनाय गच्छति तावदात्मनो निभृतागारे भवते कथयितुमिच्छति ।

**हेमलेखः**—यदि सा दशकृत्वो नो माता भवेद् वयं तामनुमानयिष्यामहे । किमस्माभिस्ते भूयोऽप्यस्ति व्यवसायः ।

**रुजाक्रान्तः** - देव । त्वं खलु मय्येकदा प्रीतिमानासीः ।

**हेमलेखः**—अहं खल्वपहारकाभ्यामेताभ्यां हस्ताभ्यामिदानीमपि तथाभूतः ।

**रुजाक्रान्तः**—भद्र देव । किं नु खलु भवतो हृदयस्यार्त्तिनिमित्तम् । यदि परितापकारणानि सख्ये न कथयसि त्वमात्मनः स्वाच्छन्द्यं प्रतिबध्नासि ।

**हेमलेखः**—आर्य्य । वर्द्धनेन वञ्चितोऽस्मि ।

**रुजाक्रान्तः**—कथं नु तद् भवेद् यदा राज्ञा स्वयं दीनाकंराज्याधिकारे कृतानुग्रहोऽसि ।

**हेमलेखः**—अये । आर्य्य । इह खलु यावत् तृणानि जायन्त इत्यादिर्विरसः प्रवादो वर्त्तते ।

(ततः पुनः प्रविशन्ति वेणुभिर्वेणुवादकाः ।)

अहो । एते खलु वेणवः । पश्यामि तावदेकम् । किं त्वया सहैकान्तेऽपसर्त्तव्यम् ।[1]

**कथं नु सखे प्रयतसे मरुता किल मृगमिव मृगव्यलक्ष्यम् ।**
**प्रलोभ्य मां प्रवचनेन गूढोक्तिबन्धे पातयितुम् ॥६६॥**

**गूढास्तीर्णः**—अहो देव । कार्य्यापेक्षया चेदहमतीव साहसिकोऽस्मि त्वत्प्रीतिर्मेऽतीवाविनयं करोति ।

**हेमलेखः**—न खल्वेतत् साध्ववगच्छामि । किं वेणुनानेन क्रीडिष्यसि ।

**गूढास्तीर्णः**—देव । न खलु शक्नोमि ।

**हेमलेखः**—प्रसीद ।

**गूढास्तीर्णः**—बाढम् । न खलु शक्तोमि ।

**हेमलेखः**—ननु त्वां प्रसादयामि ।

**गूढास्तीर्णः**—देव । एतत्स्पर्शोऽपि मे नास्ति ।

**हेमलेखः**—मिथ्याभाषणमिवैतत् सुकरम् । इमान् रन्ध्रानङ्गुष्ठेनाङ्गुलिभिश्च तावन्नियमय । मुखमारुतेन चेमं पूरय । ततोऽयमतितमां पटु सङ्गीतकमुदीरयिष्यति । पश्य तावत् । एते खलु रन्ध्राः ।

**गूढास्तीर्णः**—न खल्वहमेतान् नियमयितुं शक्नोमि यथैते सङ्गीतकमुदीरयेदिति । न मयि तादृशं नैपुणं विद्यते ।

**हेमलेखः**—अये । पश्येदानीं कीदृशीमनर्हतां ममापादयसि । त्वं हि मया क्रीडितुमिच्छसि । रन्ध्रांश्च मे विदितोऽसीति मन्यसे । मदीयं रहस्यहृदयञ्चोद्धत्तुं कामोऽसि । अथ सुनीचस्वरादारभ्योच्चैःस्वरपर्य्यन्तं विषयविस्तरक्रमेण मां ध्वनयितुमीहसे । यद्यपि नामैतस्मिन् क्षुद्रकरणे भूयः संगीतं मधुरश्च निःस्वनो विद्यते तथापि न खलु त्वमेतत् शब्दयितुं शक्नोसि । ईश्वरशोणितेनाहं पृच्छामि किं मन्यसेऽयं जनो वेणुदण्डादप्यधिकं क्रीडायोग्य इति । यं कञ्चन क्रीडायन्त्रविशेषं मां कथयसि क्षोभयन्नपि मां क्रीडायोग्यं साधयितुं न शक्ष्यसि ।

(ततः प्रविशति पुरुन्यासः ।)

आर्य्य । स्वस्ति भवते ।

---

१. गूढास्तीर्णस्येङ्गितमनु तमुद्दिश्येति बोध्यम् ।

**पुरुन्यासः**—देव। देवी भवते कथयितुमिच्छति। तच्चाविलम्बितमेव।
**हेमलेखः**—इतः शरभाकृतिममुं मेघं पश्यति भवान्[1]।
**पुरुन्यासः**—स्तोमनाम्नाहं शप एष खलु शरभाकार एव।
**हेमलेखः**—तर्कयामि नकुलसदृश एषः।
**पुरुन्यासः**—नकुलपृष्ठसदृशः खल्वेषः।
**हेमलेखः**—अथवा तिमिसदृशः।
**पुरुन्यासः**—अत्यन्तमेव तिमिसदृशः।
**हेमलेखः**—तेन ह्यहमचिरादेव मातरमुपगच्छामि। एते खलु मत्स्वभाव-पर्य्यन्तानुवर्त्तनेन मां छलयन्ति[2]। अचिरादुपगच्छामि।
**पुरुन्यासः**—तथा निवेदयिष्यामः।
**हेमलेखः**—अचिरादिति सुकरं वचः।

(निष्क्रान्तः पुरुन्यासः।)

आमन्त्रयद्ध्वं मां बान्धवाः।

(हेमलेखवर्ज्जं निष्क्रान्ताः सर्वे।)

**सोऽयं कालो विलसति पुरो डाकिनीविभ्रमोग्रो**
**रात्रौ यस्मिन् पितृवनकुलं जृम्भते भीमरूपम्।**
**पातालञ्चोद्वमति बहुलं स्पर्शसञ्चारघोरं**
**बाष्पासारं विषमयमहो जीवतां जीवितान्तम् ॥६७॥**

**अद्यैव तप्तरुधिराणि सुखं पिबेयं**
**कर्माणि चैव विकृतानि तथाचरेयम्।**
**कामो यदि स्फुरति मे दिवसो यथासौ**
**कम्पेत साध्वसवशाच्चिरमीक्षमाणः ॥६८॥**

शान्तमिदानीम्। यावन्मातरमुपगच्छामि।

---

१. इति काकुः।
२. एतद् वाक्यं स्वगतमिति बोध्यम्।

न खलु हृदय सन्त्यज स्वभावं
न च परुषोऽपि विलक्षणो भवेयम् ।
कठिनमपि कदापि मातृघाती
न विशतु मे हृदयन्तु रामभावः[1] ॥६९॥

वाचः शङ्कुनिभाः क्षिपामि कठिनाः शङ्कुं न तस्यां क्वचित्
शब्दो मे हृदयञ्च तत्र भवतां भिन्नार्थसंबुद्धये ।
आक्रोशैर्यदि तां क्षिपेयमधिकैः संतीक्ष्णशब्दाक्षरै-
र्नैतान् साधय मे कदापि हृदय स्वानुक्रियैः कर्मभिः ॥७०॥

(निष्क्रान्तः ।)

इति द्वितीयं दृश्यम् ।

१. रामः परशुरामः ।

## तृतीयं दृश्यम् ।

तत्रैव कक्षः ।

(ततः प्रविशति राजा रुजाक्रान्तो गूढास्तीर्णश्च ।)

राजा—नासौ मतः किमपि मे तदवस्थरूपो
भावोऽपि विप्लुतधियोऽस्य न नो हिताय ।

सज्जौ तावद् भवतम् ।

आदेशपत्रसहितौ हि युवामिदानी-
मुल्लण्डमाशु सह तेन विसर्ज्जयामः ॥७१॥

न चापि राज्यं मम सोढुमर्हति
तदेतदेवंविविधसंशयास्पदम् ।
क्षणे क्षणे यन्नवतां प्रपद्यते
तदीयमूढेन्द्रियवृत्तिकारणात् ॥७२॥

गूढास्तीर्णः—आवां तथैवोपपादयिष्यावः ।

शङ्का तवेयमुचिता विधिसम्मता च
यत् खिद्यसे त्वमिह पार्थिव लोकहेतोः ।
लोकस्य तद्बहुसहस्रगुणस्य भूत्यै
त्वत्संश्रितस्य मती तव वृत्तिरेषा ॥७३॥

रुजाक्रान्तः—यो नाम सङ्गरहितः पुरुषः प्रणाशात्
तेनापि जीवितमिदं परिरक्षणीयम् ।
सर्वात्मशक्तिविभवं श्रयता प्रजाना-
मेकाश्रयेण किमुतान्यपरेण राज्ञा ॥७४॥

नृपप्रणाशः प्रतिपद्यते यदि
प्रजाप्रणाशाय स कल्पते ध्रुवम् ।

जलभ्रमः पश्य विनश्यति स्वयं
सहैव तत्सङ्गवतान्यवस्तुना ।।७५।।

एतच्चक्रं विशालं नृपपदकथितं तुङ्गशैलाग्रसंस्थं
यस्येदानीं प्रसक्तं बृहदरनिवहे क्षुद्रसत्त्वाभिधानम् ।
बाह्यद्रव्यैकवृन्दं बहुशतगुणितं सर्वमन्योऽन्यसक्तं
जाते मूलप्रपाते सह निपतति तच्छेषमासङ्गयुक्तम् ।।७६।।

न वा प्रजानामधिपः कदाचि-
देकः स्वयं निःश्वसति स्म तापात् ।
आक्रन्दितैर्यन्न निषक्तरूपं
बभूव तासां परिदेवनान्तैः ।।७७।।

राजा—तेनाद्य शीघ्रगमनाय युवां सखायौ
सज्जौ प्रयोजनवशाद् भवतं प्रसन्नौ ।
यद् बन्धयामि तमिमं भयकारणं नो
योऽव्याहतैः स्वचरितैः सुतरां क्षिणोति ।।७८।।

रुजाक्रान्तगूढास्तीर्णौ—आवां त्वरयावः ।

(निष्क्रान्तौ रुजाक्रान्तगूढास्तीर्णौ ।)

(ततः प्रविशति पुरुन्यासः ।)

पुरुन्यासः—देव । स खलु मातुर्निभृतागारं गच्छति । अहमपि विलम्बि-चित्रपटेनात्मानं गोपायित्वा तयोः संवादं श्रोष्यामि । सा हि तमभियुज्य सर्वथा तद्रहस्यमभिज्ञास्यतीत्यहं प्रतिजाने । यथा च भवानाह साध्विदं खलु भवताभिहितम्—

स्थाने खलु संवादं शृणुयान्मातुरपरः स्थानगूढः ।
माता च पुत्रश्चैव परस्परस्य पक्षपातिनौ ।।७९।।

तदामन्त्रये त्वां प्रभविष्णो । यावद् भवान् न शयनाय गच्छति तावद् भवन्तमुपस्थाय सर्वमस्मद्विदितं भवते निवेदयिष्यामः ।

**राजा**—प्रिय देव। अनुगृहीतोऽस्मि।

(निष्क्रान्तः पुरुन्यासः।)

अहो पापं ममोग्रं देवेभ्योऽप्यात्मानं प्रकथयति।
आद्याभिशापाङ्कितं भ्रातुरात्मीयस्य बध इति ॥८०॥

ननु प्रार्थनेतीहापि न चाहमीशे। कुतः। इह खलु—

यदपि मनसः संङ्कल्पो मे प्रवृत्त्यनुसारतः
प्रबलदुरितैर्नष्टप्रायः स मे बलवानपि।
नर इव रतः कार्य्यद्वैते मुहुः प्रविचारयन्
प्रथमविषये प्रारम्भार्थे द्वयोरपि निष्क्रियः ॥८१॥

यद्येष पापकलुषो मम कालहस्तः
सोदर्य्यकालरुधिरैरतिपीवरः स्यात्।
किं विद्यते न दिवि पावनवारिधारा
भयात्तुषारविशदोऽद्य ययाभिवृष्टः ॥८२॥

किञ्च। किमन्यदीशकृपया साध्यं यदि सा पापान्न त्रायते।

प्रार्थनापि च विभोर्बलं विना
किं करोति हितमन्यथा नरे।
येन पापचरणाच्च रक्षति
पातकेन पतितञ्च रक्षति ॥८३॥

तेन ह्यहमाश्वासोन्मुखो भवेयम्। चरितपूर्वं मया पापम्। अहो। कीदृशी नु खलु प्रार्थना मदीयं हितं साधयेत्। किं क्षम्यतां मे पापो बध इति। नैतद् युक्तम्। कुतः।

फलं मयाद्यापि यतोऽस्य भुज्यते
सहोदरप्राणविनाशकर्मणः।

अभीष्टरत्नासनमेकतः स्थित-
ममुष्य जाया महिषीकृतेति च ॥८४॥

अपि नाम पुरुषः पापात् त्रायेत पापफलञ्च भुञ्जीत। इह खलु—

लोके नानापापवृत्तान्तघोरे
धर्मं वित्तैर्दर्पिता लङ्घयन्ति।
प्रायोऽधर्मैरर्ज्जितस्वाधिकारा
धर्माधीशञ्चालमावर्ज्जयन्ति ॥८५॥

अमुत्र तु तन्न तथा। तथाहि।

न तत्र पापस्य किल व्यतिक्रमो
यथा कृतोऽर्थः स तथा प्रकाशते।
प्रसह्य चापादशिखाग्रमेनसां
प्रमाणभावे वयमेव कल्पिताः ॥८६॥

किमतः परं वद। किञ्चावशिष्यते। एवं तर्हि—

अनुशोचनयैव साध्यतां
किमिदं हन्त तया न साध्यते।
ननु किं पुनरत्र साध्यता-
मनुशोकोऽपि यदा न साध्यते ॥८७॥

अहो दैन्यं मम तावदहो चित्तं मृत्युरिव भयङ्करम्।
अहो हृदयमाबद्धं विलेपैरिव विचेष्टमानम् ॥८८॥

अहो देवाः। समेत्य मां परित्रायद्ध्वम्। तत इदानीम्—

जानुभ्यां सुदृढाभ्यां महीं व्रज तीक्ष्णायसगुणं हृदयम्।
जातकस्येव साधय परिपेलवस्नायुजालकम् ॥८९॥

ततः सर्वं शुभं स्यात् (अपक्रम्य जानुभ्यां भूमिं पतति।)

(ततः प्रविशति हेमलेखः।)

**हेमलेखः**--अहमिदानीमेतदञ्जसा साधयानि । असौ खल्विदानीं प्रार्थयमानस्तिष्ठति ।

अधुनैव करोम्यहं तथा
निहतश्चेत् त्रिदिवं स यास्यति ।
निहतस्य पितुस्तथैव मे
प्रतिकारोऽपि पुनर्मया कृतः ॥९०॥

एतन्ननु परीक्ष्यम् । तथाहि ।

निहतः खलु मे दुरात्मना
गुरुरेतेन नितान्तवत्सलः ।
अहमेकसुतो गुरोर्भवे-
दयमेव प्रहितो दिवं मया ॥९१॥

अहो । एतन्नाम पारितोषिकपूर्वेन वेतनेन नियुक्तस्य कर्म न तु वैरस्य प्रतिमोचनम् । कुतः ।

अनेनैवासीन्मे न खलु हतपूर्वो गुरुरसौ
मुहुर्भोगासक्तः कृपणहृदयः पापविकलः ।
यथा पापैर्दीप्तैः स्फुरितरुचिभिस्तीव्रमधुभि-
र्मधौ वृक्षः पुष्पैरिव किमपि रागाभिललितः[1] ॥९२॥

गण्यते स हि कथं नु सम्प्रति
वेत्ति कस्तदिति दैवतं विना ।
प्रेक्ष्य नः किल यथा प्रतीयते
प्रेत्य तैः[2] स विषमां दशां गतः ॥९३॥

इत्थं गते पितरि मेऽथ तथास्थितेऽस्मिन्
वैरस्य मे किमधुना प्रतिमोचनं स्यात् ।

---

१. रागाभिलुलित इति च ध्वनिः ।
२. पूर्वश्लोकोक्तैः पापैरित्यर्थः ।

यावत् स्थितः सुदृढमात्मविशुद्धयेऽसौ
युक्तश्च गन्तुमथवा परलोकयात्राम् ।।९४।।

न हि। भोः खड्ग। कोषनिवेशितस्तावद् भव। दारुणतरं मुष्टिग्रहञ्चापेक्षस्व। यावत्—

मत्तोऽसौ भृशमथवा भवेत्प्रसुप्तो
रुष्टो वा शपथरतोऽथवा सलीलः।
व्यासक्तः कलुषमतिः क्रियान्तरे वा
यत्र स्यात् कथमपि नास्य मोक्षलेशः ।।९५।।

ननु तत्क्षणमेव पातयैनं
भृशपातं निरये विगीतवृत्तम्।
प्रणिहत्य दिवं यथा पदाभ्यां
सुदुरात्मा तमियात् तदेकलक्ष्यम् ।।९६।।

मां नन्वपेक्षते माता क्षणमोक्षश्च ते मया।
वर्द्धयिष्यति घोरार्त्तिं पापिष्ठ भेषजं यथा ।।९७।।

(निष्क्रान्तः।)

(राजोत्थाय पुरो गच्छति।)

राजा— ऊर्द्ध्वं गच्छन्ति मे वाचो भावश्चायमधः स्थितः।
भावेन रहिता वाचो न यान्ति देवसन्निधिम् ।।९८।।

(निष्क्रान्तः।)

इति तृतीयं दृश्यम्।

## चतुर्थं दृश्यम् ।

तत्रैव कक्षान्तरम् ।

(ततः प्रविशति राज्ञी पुरुन्यासश्च ।)

**पुरुन्यासः**—सद्य एव स आगन्ता। पश्य । अत्रभवती तमभियोगैराहन्तुमर्हति ।

ब्रूयाश्चैनम्—

**सोन्मादचेष्टास्ते हि साम्प्रतमतिविततः सुदुःसहाश्च ।**
**वयं त्वदर्थे राज्ञः कोपस्य तव चान्तरे स्थिताः ॥९९॥**

इहाप्यात्मानं गोपायिष्यामि । प्रसीद । सुव्यक्तमेनमभियोक्तुमर्हसि ।

**हेमलेखः**—(नेपथ्ये) मातर्मातर्मातः ।

**राज्ञी**—तथैव ते प्रतिजाने । अलमन्यथा सम्भाव्य । यावदपसर । तस्य हि पदशब्दः श्रूयते । (पुरुन्यासो विलम्बिचित्रपटेनात्मानं गोपायति ।)

(ततः प्रविशति हेमलेखः ।)

**हेमलेखः**—ननु मातः का प्रवृत्तिः ।
**राज्ञी**—हेमलेख । तव पितरि बलवदपराद्धोऽसि त्वम् ।
**हेमलेखः**—मातः । मम पितरि बलवदपराद्धासि त्वम् ।
**राज्ञी**—एह्येहि । असम्बद्धप्रलपितैः खलु प्रतिभापसे ।
**हेमलेखः**—याहि याहि । पापप्रजल्पितैः खलु परिपृच्छसि ।
**राज्ञी**—कुतः । कथमिदानीं हेमलेख ।
**हेमलेखः**—का नु प्रवृत्तिः ।
**राज्ञी**—किं मां विस्मृतवानसि त्वम् ।
**हेमलेखः**—नहि । स्वस्तिकेनाहं[1] शपे नैतदेवम् ।

**राज्ञो महिषी तावत् त्वमसि तवैव भर्त्तुर्भ्रातृजाया ।**
**हा दिष्टमधन्यतया त्वमसि ममैव तावन्माता ॥१००॥**

---

१. तदाख्येन दण्डेन यत्र कृष्टो घातितः ।

**राज्ञी**—मैवम् । एवं तर्हि संवादसहान् पुरुषांस्तुभ्यं योजयामि।
**हेमलेखः**—एह्येहि । अत्र तावदुपविश।

**न त्वमितोऽद्य प्रचलेर्न च तावत् पादमेकमपि गच्छेः ।**
**यावत्तव स्वं रूपमादर्शतले दर्शयामि ।।१०१।।**

**राज्ञी**—किं नु खलु करिष्यसि । न खलु मां मारयिष्यसि। परित्रायध्वं परित्रायध्वं भोः ।

**पुरुन्यासः**—(विलम्बिचित्रपटस्य पृष्ठतः) कथ भोः । परित्रायध्वं परित्रायध्वं परित्रायध्वम् ।

**हमलेखः**—(असिं विकृष्य) कथमिदानीम् । किमपसर्पोऽयम् । स्वनामाङ्कित-मुद्रया शपे हतो हतोऽयमिति । (विलम्बिचित्रपटान्तरेण।हन्ति ।)

**पुरुन्यासः**—(विलम्बिचित्रपटस्य पृष्ठतः) हा हतोऽस्मि । (पतति म्रियते च ।)

**राज्ञी**—अहो धिक् । किं खलु त्वया कृतम्।

**हेमलेखः**—न हि। नाहं जाने । किमसौ राजा ।

**राज्ञी**—अहो । कीदृशं खलु घोरं साहसिकञ्च कर्म तत् ।

**हेमलेखः**—किं घोरं कर्मेति । साध्वि मातः। एतत् तादृशं पापं यादृशं खलु राजानं घातयित्वा तद्भ्रातुः पतित्वे वरणमिति ।

**राज्ञी**—किं राजानं घातयित्वेति ।

**हेमलेखः**—अये भद्रे। तान्येव मे पदान्यासन् । (विलम्बिचित्रपटमुत्क्षिप्य पुरुन्यासं पश्यति ।) हा हतोऽसि साहसिक परव्यापारेषु व्यापारवद् वैधेय। आमन्त्रये त्वाम् ।

**भवतोऽप्युत्तमोऽयमिति भवन्तमचिन्तयं गृहाण दिष्टम् ।**
**अतिव्यापारवत्त्वं पश्यसि ननु संशयायेति ।।१०२।।**

अलमात्मनो हस्तौ सम्पीड्य। शान्तम् । यावदुपविश । तव हृदयं खल्वहं सम्पीडयानि । ननु तथैवाहं कुर्य्याम्——

**स्यान्मूर्खं तेऽद्य हृदयं यदि भेदयोग्य——**
**मन्यायवृत्तिचरणान्न तथा द्रढिष्ठम् ।**
**एवं यथात्मविषयग्रहणाय तावत्**
**पाषाणदुर्गसदृशं सुतरामभेद्यम् ।।१०३।।**

**राज्ञी**— किं नु खलु मयाद्य कृतं यद् व्यापारयसि विलोलां रसनाम् ।
मातरं तेऽधिक्षिपन्नतिपरुषार्थपदैर्वचोभिः ॥१०४॥

**हेमलेखः**—तादृक् कर्म विदूषयेद् यदनघां लज्जावतीनां श्रियं
ब्रूयाद् धर्ममपि प्रहीणचरितं दम्भानुविद्धं यथा ।
शुद्धं प्रेम विगीतमेतदिति वा हृत्वा श्रियं घोषये-
दुद्वाहे च नयेन्मृषैव शपथं द्यूते रतानामिव ॥१०५॥

अहो । किञ्च ।

विवाहबन्धाभिधपुण्यकर्मणो
हरेत् स्वरूपं दुरितं यदेव ते ।
मनोज्ञधर्माचरितं तथाभिधं
कवेरसम्बद्धकृतिञ्च साधयेत् ॥१०६॥

रक्तं ह्रिया मुखमपि त्रिदशालयस्य
संस्मृत्य कर्म यदिदं परिलुप्तशोभम् ।
शोकेन संहृतरुचिर्विपुला च पृथ्वी
संहारकाल इव विह्वलमानसेयम् ॥१०७॥

**राज्ञी**—अहो धिक् । किं नु खलु तत् कर्म यस्य प्रस्तावनामात्रमप्येताव-दुच्चण्डशब्दमयं भवति ।

**हेमलेखः**—पश्य तावदिहैतच्चित्रमथेदञ्च भ्रात्रोर्द्वयोः प्रतिकृतिरूपम् ।

पश्यैतां प्रथमस्य कामपि पुरो भास्वल्ललाटश्रियं
सूर्यस्येव च केशपाशमनघं विष्णोरिवास्यं तथा ।
भौमस्येव विलोचनं पुनरिदं स्वादेशभीतिप्रदं
तं धैर्य्येण मनोहरं बुधमिवोत्तुङ्गाद्रिकूटस्थितम् ॥१०८॥

गुणैकसन्धानमिवाहितं सुरै—
र्वपुस्तदीयं प्रियदर्शनं तथा ।
नरोत्तमं दर्शयितुं जनाय तैः
समेत्य भर्त्ता किल ते विनिर्मितः ॥१०९॥

एष खलु ते भर्त्तासीत् । पश्येदानीं किमिदमिति । अयं पुनस्ते भर्त्ता—

शस्याग्रमिव क्षेत्रे निर्घातिनाभिहतं पूर्वेण ।
नीरुजं भ्रातरं यः समभिजघान पार्श्ववर्त्तिनम् ॥११०॥

किं ते चक्षुरस्ति ।

कथं खलु रम्यशैले सम्भाव्यफले परित्यक्तभोगा ।
अनूपप्रदेशेऽस्मिन्नात्मानं तेऽद्य भरिष्यसि ॥१११॥

हा । किं ते चक्षुरस्ति । न च खलु त्वमनुराग एष इति वक्तुमर्हसि । कुतः ।

तवास्मिन् वयसि सोऽसौ यौवनमदोऽपि भूयसोपशान्तः ।
बुद्धयपेक्षश्च बुद्धया कयासि तस्मादिमं प्राप्ता ॥११२॥

इन्द्रियज्ञानञ्च ते नूनमस्त्येव । अन्यथा चित्तवृत्तिरपि न स्यात् । तदिन्द्रियज्ञानञ्च ते नूनमवशीकृतम् । यतः ।

मतिभ्रमस्यापि तथा न विभ्रमो
न चेन्द्रियज्ञानमनेन नाशितम् ।
विवेकबुद्धिस्तु ततोऽपि शिष्यते
तदेतदर्थद्वयभेदसाधनम् ॥११३॥

को नु खलु स पिशाचः —

क्रीडान्धेव शिरस्कभूषिततनुर्येनासि भो वञ्चिता
दृष्टिर्बोधमृते यथान्यहृदये दृष्टिं विना बोधनम् ।
दृष्टया हस्तमपास्य ते श्रुतिरियं घ्राणञ्च सर्वं विना
तेषां दुष्टमपीन्द्रियं न खलु ते मौढ्यं तथापादयेत् ॥११४॥

अहो लज्जे । क्व नु ते मुखरागः ।

पापिष्ठो यदि मदनः प्रजावतीषु
संक्षोभं जनयति वेगवत्प्रभावम् ।

सन्दीप्ते वयसि तु तिष्ठतां तदग्नौ
लाक्षेव प्रशमरतिर्विनाशमेतु ॥११५॥

किञ्च ।

ह्रियं मा कार्षीस्त्वं मदविलसितैर्यौवनवतां
यदेतेषां भूयो मदनगुरुवेगः प्रसरति ।
जराप्येवं यस्माज्ज्वलयति च शान्तं मनसिजं
तथा बुद्धिः कामं बलवदशनं पोषयति च ॥११६॥

**राज्ञी**—अयि हेमलेख ।

नातः परं वचनमर्हसि वक्तुमेवं
दृष्टिञ्च वर्त्तयसि मे दुरितेष्वमीषु ।
पश्यामि चेतसि तथा दृढकृष्णवर्णं
नश्येद् यथास्य न कदापि कलङ्करागः ॥११७॥

**हेमलेखः**—मैवम् ।

धिक् पापव्यासङ्गं प्रासादेर्ऽस्मिस्ते कामविलसितैः ।
शूकरगृह इव गर्ह्ये तत्पशोरतिजघन्यरतिभिः ॥११८॥

**राज्ञी**—अयि हेमलेख ।

नातः परं ब्रूहि मे पदानीमानि शङ्कुप्रायाणि ।
श्रोत्रयोरतिपरुषाणि नातः परं त्वं कथय सुत ॥११९॥

**हेमलेखः**—दुर्वृत्तो घातकश्चासौ पूर्वभर्त्तुस्तवात्मनः ।
दासश्च महतस्तस्य कलां नार्हति षोडशीम् ॥१२०॥

भवति च भुवि राज्ञां नीचराजो जघन्यः
किमपि ननु पितुर्मे राज्यभागापहारी ।
गुरुमणिमयरत्नं गूढमाच्छिद्य पुंसो
मम पुनरिति योऽयं ग्रन्थिभेदीव भाति ॥१२१॥

**राज्ञी**--नातः परं कथय।
**हेमलेखः**—अयं खलु राज्ञश्चित्रवेषखण्डधारी--

(ततः प्रवशति प्रेतः।)

देवाः सर्वे समेत्य पक्षैः समाच्छादयत रक्षत माम्।
यथोचितसौम्यवेषस्त्वं पुनरिहायातोऽसि कथम् ॥१२२॥

**राज्ञी**--अहो। उन्मत्तोऽयम्।

हेमलेखः--किमसि न सुतं मन्दं प्राप्तो विगर्हितुमेव मां
स्खलितसमयं कार्य्यभ्रष्टं विषादहतं पुनः।
विचलितधियं घोरादेशग्रहे तव निश्चिते
ननु कथय भोः प्रेतायातः कथं नु ममान्तिकम् ॥१२३॥

**प्रेतः**— मां त्वं विस्मर भोः सुत तवाभ्यागमनमेतन्मया कृतम्।
मन्दप्रायं खलु ते सङ्कल्पमधुना तेजयितुम् ॥१२४॥

**इतश्च**—

क्षोभेण पश्य जननीं तव पीड्यमाना-
मन्तर्विषादमुपसान्त्वय चाभितोऽस्याः।
भावो हि तासु बलवान् परिदुर्बलासु
तद्वत्स धारयितुमर्हसि वाग्भिरेनाम् ॥१२५॥

**हमलेखः**—आर्ये। कथं नु ते वृत्तान्तः।
**राज्ञी**—अहो बत। कथं नु ते वृत्तान्तः--

यदीक्षसे शून्यमिदं पदं पुरः
पदैरिमैः पृच्छसि चाशरीरिणम्।
विलोचनाभ्यामतिविह्वलात्मतां
ब्रवीषि चोदग्रविकारबाहितः ॥१२६॥

किञ्च ।

युद्धाय यत्ता इव सुप्तयोधा
विनिश्चलाङ्गास्तव केशपाशाः ।
उत्थाय सद्यो बहिरङ्गरूपा--
स्तिष्ठन्ति सन्नद्धचलच्छरीराः ॥१२७॥

भो वत्स । त्वदीये ज्वलत्तेजसि संरम्भवह्नौ तावच्छान्तिमद् धैर्य्यवारि समभिषिञ्च । किं नु खलु प्रेक्षसे त्वम् ।

हेमलेखः—तमेव प्रेक्षे । तमेव प्रेक्षे । पश्य । कीदृशो विवर्णोऽसौ मां तीक्ष्णमभिप्रेक्षते ।

तस्याकृतिर्दारुणदृष्टिरेषा
तस्यागमे योऽपि च हेतुरिष्टः ।
उभौ समेत्योग्रपदोपदेशा--
दुद्बोधयेतामुपलाभिधानम् ॥१२८॥

दृशं मा कार्षीस्त्वं करुणकरुणां तां मयि पुन-
र्यथा नश्येद् भावो न मम परुषोऽप्याकुलतया ।
तथाभूते लक्ष्यं भवति निजवर्णेन रहित-
मसृक्स्थाने भूयो नयनसलिलञ्च प्रसरति ॥१२९॥

राज्ञी--कं न्वेवमभिभाषसे ।

हेमलेखः—न खलु तत्र किञ्चित् प्रेक्षसे त्वम् ।

राज्ञी—न किञ्चिदपि । यत्तु सर्वमस्ति तत् प्रेक्षे ।

हेमलेखः—न वा किञ्चित् श्रुतवत्यसि त्वम् ।

राज्ञी--नहि । आवयोर्वचनं वर्ज्जयित्वा न किञ्चित् ।

हेमलेखः—कथम् । ननु तत्र पश्य । पश्य । कथमसौ क्रमेण तिरोधत्ते ।

सोऽयं तातो ममैव यथा पुरा जीवन्नुचितवेषभृत् ।
तत्रैव हि ननु पश्य द्वारेणाद्यापि च गच्छति ॥१३०॥

(निष्क्रान्तः प्रेतः ।)

राज्ञी-- इदं मनःकल्पितमेव ते पुरो
विना शरीरं किल सत्त्वदर्शनम् ।

विशेषसम्मोहविधेः क्वचित्पुनः
प्रवर्त्तते तादृशपाटवं सुत ॥१३१॥

हेमलेखः—किं सम्मोह इति ।

प्रस्पन्दते मम हि नाडिरियं यथा ते
स्वाभाविकञ्च नियतं स्वनमादधाति ।
नायं तु मोह इति तत्र परीक्ष्य नेयं
भूयो ब्रवीमि खलु ते तदमोहसाध्यम् ॥१३२॥

मातः । ईश्वरप्रसादस्तवेष्टश्चेत्—

सम्मोह एष किल मे न कृतं तवेति
मा भून्मनस्यलमसत्यविलेपनं ते ।
गूढं व्रणं हि बहिरावरणेन कृत्वा
दौरात्म्यमेतदभितो बहुलीकरोति ॥१३३॥

देवेभ्यः प्रतिपत्तुमर्हसि ततः पापं त्वयापादितं
यद्भूतं ननु तत्कृते कुरु शुचं यद्भावि तत्सन्त्यज ।
नैवं स्थापय पापसारमधुना कक्षेषु पापात्मसु
दुष्टाः पूर्वमिमे तु तेन विधिना दूष्यन्त एवाधिकम् ॥१३४॥

किञ्च ।

क्षमस्वेदं धर्म्यं मम किमपि संरम्भचरित-
मयं कालः स्फीतो विषयरससम्भोगबहुलः ।
स्वयं धर्मेणापि प्रतिविहितशङ्काकुलतया
प्रसाद्यश्चाधर्मस्तव खलु विदध्यां हितमिति ॥१३५॥

राज्ञी—अयि हेमलेख । त्वया खलु मम हृदयं द्विधा भिन्नम् ।

हेमलेखः—हन्त ।

तयोर्दुष्टतरं भागं दूरमाक्षिप्य शोभने ।
अन्यतरेण चाश्वास्य जीवं त्वं पुण्यजीवितम् ॥१३६॥

आमन्त्रये त्वां सुरात्रये । न खलु त्वमद्य पितृव्यस्य मे शयनं भजस्व । यदि ते सत्त्वं न विद्यते तदिदानीं प्रतिपद्यस्व ।

तत्राचारोऽङ्कुतकृतिरसौ बोधसन्त्यागहेतु-
र्घोरो घोरेष्वपि विचरितेष्वन्यथैवापरेषु।
पुण्यं वृत्तं क्षपितदुरितं सन्तताभ्यासयोगात्
सिद्धप्रायं वसनमिव ते नूतनं यः करोति ॥१३७॥

तेन हि—

नियमय त्वमात्मानं नन्वद्य रजन्यां तेन च विधिना ।
सुकरः स्यात् तवापरस्ततोऽपि सुकरो नियमोऽपरः ॥१३८॥

यतः ।

आचारः प्रकृतिमपि प्रसाधयेत् स
स्वां शक्तिं खलु महतीं श्रितो नराणाम् ॥
पापं वा हृदयगतं जयेत् समग्रं
दूरं तत् कथमपि वा क्षिपेदनर्थम् ॥१३९॥

भूयोऽप्यामन्त्रये त्वां सुरात्रये । यदा देवानामाशिषस्त्वमभिकाङ्क्षसि तदाहं त्वदीयामाशिषमभिकाङ्क्षामि। (पुरुन्यासमभिलक्ष्य) अथैनं देवन्तु भृशमनुशोचामि ।

दैवेन पश्य विहितं हि तथा भवेयं
दण्डस्य साधनमथास्य च सेवकोऽहम् ॥
एतेन मे किमपि दण्डविधानमिष्ट-
मेतस्य चापि परिभाव्य मया यथैवम् ॥१४०॥

अहमेनं गूहयामि मत्कृतवधनिमित्तञ्चास्य व्यक्तीकरिष्यामि। तद्भूयो-ऽप्यामन्त्रये त्वां सुरात्रये ।

यदि तु परुषो भवेयं तद्यथा नाहं परुषो भवेयम् ।
अशुभं यदि प्रवृत्तं प्रवर्त्तेत ततोऽप्यशुभतरम् ॥१४१॥

भद्रे । अथ पुनः—

राज्ञी—किमहं कुर्य्याम् ।

**हेमलेखः**—न खल्वेतत् सर्वथा यत्तेऽहं दिशामि । तथाहि ।

कामोन्मत्तः किमपि शयने लोभयित्वा कदाचिद्
गण्डे भूयो यदि तु भवतीं पीडयेदङ्गुलीभिः ।
धूर्त्रैर्द्वित्रैः प्रियतम इति प्रीणयेच्चुम्बितैर्वा
क्रीडेत् कण्ठे नृपतिरपि वा दूषितैः स्वैः कराग्रैः ॥१४२॥

हृता तदानीं रतलीलया त्वं
वृत्तान्तमुद्धाटय तत्समक्षम् ।
सोन्मादभावो यदयं मदीयो
व्याजेन सिद्धो न तु सत्यमेव ॥१४३॥

युक्तं किल तस्मै त्वया सर्वमेतदुद्धाटयितुम् । कुतः ।

कासौ स्त्री नहि या नृपस्य महिषी रूपेण साध्वी तथा
धर्मेणापि महीयसी ननु पुनश्चक्षुष्मती विद्यया ।
रक्षेद् वृत्तमिदं स्वभूतिविषयं तस्माद्भवेद् यः स्वयं
मार्ज्जारो यदि वाथ भेक इति वा रात्रिञ्चरो वा द्विजः ॥१४४॥

का नु खल्वेतत् कुर्य्यात् । नहि । ननु रहस्यमेतद् रक्षितव्यमिति बुद्धिसामान्यमप्युपेक्ष्य—

विवृणु तदिमां मञ्जूषां त्वं गृहस्य शिरःस्थितां
कपिरिव पुरा गाथागीतः पतन्तु च पक्षिणः ।
कथमिदमिति ध्यात्वा तस्यां प्रविश्य परीक्षया
निपतितुमहो भग्नग्रीवं ततोऽर्हसि च क्षितौ ॥१४५॥

**राज्ञी**—विश्रब्धो भव ।

शब्दाश्चेच्छ्वासाः स्युः श्वासा यदि पुनर्भवेयुः प्राणाः ।
त्वदुक्तं शंसितुं सुत न खलु मे विद्यन्ते प्राणाः ॥१४६॥

**हेमलेखः**—अहमुल्लण्डाय समादिष्टः । किं खलु जानासि ।

**राज्ञी**—हन्त। विस्मृतं खलु मया । एतदेवं व्यवसितम् ।

**हेमलेखः**—सन्ति तावन्मुद्राङ्कितानि पत्राणि । मम च सहाध्यायिनौ शासनहारिणौ । तयोर्मे तावान् प्रत्ययो यावानाशीविषयोः । ताभ्यामेव मदर्थमुपायस्त्वरयितव्यः शाठ्यञ्च तावद् व्यवस्थापयितव्यम् । ननु तथैव सम्पाद्यताम् । कुतः । एतन्नाम महत् कौतुकं यद् यन्त्रकारः स्वयमर्पितेन ज्वलनास्त्रेण विमर्दितः स्यादिति । तत् खलु विषमं स्यात्—

**यदि परमनयोर्मयि प्रयुक्तात्**
**कथमपि रन्ध्रगतायुधात् परस्तात् ।**
**नभसि विपतितं निधाय गूढं**
**गुरुदहनास्त्रमिमौ न नाशयानि ॥१४७॥**

**अहो नु वृत्तमेतावत् संवृत्तमतिशोभनम् ।**
**यदेकस्मिन्नपि क्षेत्रे शाठ्यद्वयमुपस्थितम् ॥१४८॥**

अस्यैव पुरुषस्य[1] कारणाच्छलेनाहं प्रस्थापयितव्यः । यावदेनं शवं पार्श्वप्रकोष्ठेऽपकर्षामि । मातः । आमन्त्रये त्वां सुरात्रये ।

**ननु च यः सचिवः कितवोऽभवत्**
**किमपि हीनमतिर्बहुजल्पकः ।**
**उपरतोऽद्य पुनः स्तिमितो गुरुः**
**स बलवद्बलवन्निभृतो मतः ॥१४९॥**

आर्य्य । एहि तावद् भवत्प्रसङ्गपर्य्यवसानाय । आमन्त्रये त्वां सुरात्रये मातः । (पृथग् निष्क्रान्तौ । हेमलेखस्तु पुरुन्यासमपकर्षन् निष्क्रान्तः ।)

इति चतुर्थं दृश्यम् ।

**इति तृतीयोऽङ्कः ।**

---

१ पुरुन्यासमभिलक्ष्येति बोध्यम् ।

## चतुर्थोऽङ्कः ।

### प्रथमं दृश्यम् ।

दुर्गस्थः कक्षः

(ततः प्रविशति राजा राज्ञी रुजाक्रान्तो गूढास्तीर्णश्च ।)

**राजा**— अर्थवन्ति खल्विमानि हृदयोच्छ्वसितानि तव श्वसितानि ।
तत्त्वं व्याख्यायस्व श्रेयो हि नस्तद् विज्ञातुम् ॥१॥

क्व ते पुत्रः ।

**राज्ञी**—क्षणं नौ क्रियतां निर्मक्षिकम् ।

(निष्क्रान्तौ रुजाक्रान्तगूढास्तीर्णौ ।)

अहो नु वल्लभ देव । किं खलु मयाद्य रात्रौ दृष्टम् ।

**राजा**—गर्त्तरुदे । किमिव । कथं नु हेमलेखः ।

**राज्ञी**— अन्योऽन्यप्रतियुध्यमानपवनक्षुब्धाब्धितुल्यः स्वयं
पश्चाच्चित्रपटस्य निःस्वनमसौ श्रुत्वासिमाकृष्टवान् ।
सोन्मादः किल मूषिकोऽयमयमित्युच्चैः समाक्रुश्य च
तेनैवाहनदाशु वृद्धसुजनं नैवात्मनो गोचरम् ॥२॥

**राजा**—अहो अत्याहितम् । यदि वयं तत्र भवेम नन्वस्माकमपि सैव गतिर्भवेत् ।

तस्य खलु स्वैरगतिः सर्वेषां नः शङ्कां पिशुनयति ।
तवात्मनोऽथ मम चापि सर्वस्यान्यस्य च सम्प्रति ॥३॥

अहो कथमस्य दारुणकर्मणो निमित्तं दर्शयितव्यं स्यात् ।

दोषोऽयमस्मासु विनिश्चयेन
समर्पितः स्याद् यदुपेक्षितोऽसौ ।
युवा प्रमत्तो जनसङ्गतो वा
न संयतोऽस्माभिरवेक्ष्य चेति ॥४॥

किन्तु ।

तथैवास्मिन् स्नेहस्तनयसदृशे नः समभवद्
यथा दोषो व्यक्तः कथमपि पुरोपेक्षित इव ।
प्रदुष्टो रोगस्तत्प्रसरकलुषाणां सुनिभृतः
स नो दोषस्तावत् सविष इव मर्माणि तुदति ॥५॥

क्वासौ यातः ।

राज्ञी—आत्मना हतस्य तस्य शवमपसारयितुमिति ।

एतेन लक्ष्यमिदमेव यदेष पुत्रः
सोन्मादभावविहतोऽपि ततोऽन्यरूपः ।
कृत्वा कुतोऽपि विकृतं नयनाम्बुवर्षी
लोहेषु काञ्चनमिवैष यथा विभाति ॥६॥

राजा—अयि गर्त्तरुदे । एहि तावत् ।

यावत् सूर्यकरैर्महाद्रिशिखरं स्पृश्येत नैवायतै-
र्नावा तावदितः प्रवासगमनं साध्यं हि तस्याञ्जसा ।
पापं कर्म च तन्नरेन्द्रसुलभं माहात्म्यमाश्रित्य नः
क्षन्तव्यं किल नैष दोष इति सद्युक्त्यापि गुर्वर्थया ॥७॥

भो गूढास्तीर्ण ।

(ततः पुनः प्रविशति रुजाक्रान्तो गूढास्तीर्णश्च ।)

द्वात्रेव सखायौ यातमन्येषाञ्च साहायकमादातुमर्हथः ।

उन्मत्तेन हि सुतेन पुरुन्यासोऽसौ सहसा घातितः ।
मातुर्निभृतागारात् कुतोऽपि च पुनः समाकृष्टः ॥८॥

यातं तावत् तदन्वेषणाय। तं सान्त्वमाभाषेयाथाम्। शवञ्चास्य देवायतने समानेतव्यम्। प्रसीदतम्। त्वरेथां तावत्।

(निष्क्रान्तौ रुजाक्रान्तगूढास्तीर्णौ।)

एहि गर्त्तरुदे। प्राज्ञान् बान्धवान् समाहूय वेदयामः किं नो व्यवसितं किञ्च कार्यं कालातिक्रान्तमित्येतदुभयमिति। तथा च--

कौलीनाक्षरमस्मदीयमनघं नामातिलङ्घ्य स्वयं
दिष्ट्याकाशममुं सदाक्षतरुचिं संस्पृश्य यायादलम्।
गोलास्त्रं यदि जीवितान्तकरणं गोलासनप्रेरितं
स्वं लक्ष्यं परिहाय जिह्मनियमाद् दूरं पतेद् व्यायतम्[1] ॥९॥

अये तन्मयि वात्सल्यादेहि तावदितः प्रिये।
मनो हि मे समाविष्टं संभ्रमेण भयेन च ॥१०॥

(निष्क्रान्तौ।)

इति प्रथमं दृश्यम्।

---

१. अत्र मूलस्थार्थो न स्फुटः। तथापि यथामति समनूदितः। एवं क्वचिदन्यत्रापि द्रष्टव्यम्।

## द्वितीयं दृश्यम् ।

तत्रैव दुर्गे कक्षान्तरम् ।

(ततः प्रविशति हेमलेखः ।)

**हेमलेखः**—साध्वपसारितम् ।
**रुजाक्रान्तगूढास्तीर्णौ**—(नेपथ्ये) हेमलेख । देव हेमलेख ।
**हेमलेखः**—कोऽयं शब्दः । को नु हेमलेखमाह्वयति । अये । एतौ तावदित एवाभिवर्त्तेते ।
(ततः प्रविशति रुजाक्रान्तो गूढास्तीर्णश्च ।)
**रुजाक्रान्तः**—देव । किं नु खलु भवता शवेन कृतम् ।
**हेमलेखः**—तत्तु रजसा संयोजितं यस्य तत् सजातीयम् ।
**रुजाक्रान्तः**—ब्रूहि नः क्व तदिति येन तदितो देवायतनमुपनेष्यामः ।
**हेमलेखः**—मास्मिन् प्रत्ययमादधीथाः ।
**रुजाक्रान्तः**—कस्मिन् ।
**हेमलेखः**—यदहं त्वदीयं रहस्यं रक्षितुं पारयामि न त्वात्मनो रहस्यमिति । किञ्च ।

**रहस्यस्य शोषणेन भवतास्मि यदैवं भृशमनुयुक्तः ।**
**को नु मयोत्तरवादो राज्ञः सुतेन तत्र देयः ॥११॥**

**रुजाक्रान्तः**—देव । किं मां शोषण इति मन्यसे ।
**हेमलेखः**—अये । आर्य्य । यो हि राज्ञः प्रसादं प्रतिग्रहमधिकारञ्च समादत्ते । अवसाने पुनरेते पुरुषा राज्ञो महत्कार्य्याय प्रभवन्ति । स हि कपिरिव तान् दंष्ट्रान्तरे स्थापयति ये नाम पूर्वं मुखाभ्यन्तरे रक्षिताः पश्चान्निगरणाय कल्पन्ते । यावदस्य त्वदाहृतेन प्रयोजनं स्यात् तावदनेन सम्मर्दितः शोषण इव नीरसो भविष्यसि ।
**रुजाक्रान्तः**—देव । न खलु त्वद्वचनमवगच्छामि ।
**हेमलेखः**—तेनाहं प्रीतोऽस्मि । कूटवचनं हि बालिशस्य श्रुतावनवगतं नश्यति ।
**रुजाक्रान्तः**—देव । क्व नु तच्छवं विद्यत इति भवान् खलु नो वक्तुमर्हति । अस्माभिः सार्द्धञ्च राज्ञः समीपं भवता गन्तव्यम् ।

**हेमलेखः**––शवं खलु राज्ञा सार्द्धं[1] विद्यते राजा[2] तु शवेन सार्द्धं न विद्यते। राजा नाम सत्त्वम्––

**गूढास्तीर्णः**––देव। किं सत्त्वमिति।

**हेमलेखः**––यदसत्त्वभूतमिति। मां तस्य समीपं नय। निगूहस्व रे शृगाल। सर्वे च तमनुसरत।

(निष्क्रान्ताः सर्वे।)

इति द्वितीयं दृश्यम्।

---

१ मृतेन पूर्वराजेनेत्यर्थः।

२ वर्तमानराज इत्यर्थः। नेदानीमपि मया हत इति यावत्।

## तृतीयं दृश्यम् ।

तत्रैव दुर्गे कक्षान्तरम् ।

(ततः प्रविशति सपरिजनो राजा ।)

**राजा**—तस्यान्वेषणाय शवस्य चानुसन्धानाय पुरुषौ मया प्रेषितौ ।

अत्याहितं महदिदं यदसंयतोऽसौ
नास्मिंस्तथापि गुरुदण्डविधानमिष्टम् ।
मूढात्मनां प्रियतमः स यदा प्रजानां
रागं दृशोर्न तु विचारमपेक्षिणीनाम्[1] ॥१२॥

यदैवं तदापराद्धस्य दण्ड एव गण्यते न जातु सोऽपराधः । अतः—

दूरप्रवासगमनं सहसा किमेत-
दित्यस्तु चिन्तितमिदं सुलभार्थसिद्ध्यै ।
रोगो दुरन्त इति चेत् सदृशैरुपायैः
कालक्रमेण यदि शाम्यति वा न वेति ॥१३॥

(ततः प्रविशति रुजाक्रान्तः ।)

कथमिदानीम् । किं खलु संवृत्तम् ।

**रुजाक्रान्तः**—देव । क्व नु तच्छवं गोपायितमिति वयं तस्मादुपलब्धुं न समर्थाः ।

**राजा**—क्व तु सः ।

**रुजाक्रान्तः**—देव । बहिः । भवन्निदेशलाभायच रक्षितः ।

**राजा**—तमस्मानुपानय ।

**रुजाक्रान्तः**—भो गूढास्तीर्ण । देवं तावत् प्रवेशय ।

(ततः प्रविशति हेमलेखो गूढास्तीर्णश्च ।)

**राजा**—अथ हेमलेख । क्व नु पुरुन्यासः ।

**हेमलेखः**—नैशभोजने ।

---

१. उपाश्रितानामिति पाठविकल्पः ।

**राजा**—किं नैशभोजन इति । क्व ।

**हेमलेखः**—यत्र नासौ भुङ्क्ते । अपि तु भुज्यते । नयज्ञानां कृमीणां काचित् परिषदद्यापि तस्मिन् व्यापृता । कृमिर्नाम वोऽन्नसभायामेकराड् भवति । वयं खल्वात्मानं पोषयितुमेव प्राण्यन्तराणि पोषयामः । आत्मानञ्च कृमीणां निमित्तं पोषयामः । पीनो राजा वोऽथ कृशो भिक्षुकश्च वो द्विविध आहारो द्विविधञ्च पात्रमेकस्यैव भोक्तुरर्थं उपनीतौ । एतावान् परिणामः ।

**राजा**—हा कष्टम् । हा कष्टम् ।

**हेमलेखः**—पुरुषो हि राज्ञो मांसेन पुष्टं कृमिं मत्स्यमिव भक्षयेत् तादृशकृमिमांसेन पुष्टं मत्स्यमपि भक्षयेत् ।

**राजा**—किमनेन मन्यसे ।

**हेमलेखः**—कथं खलु राजा भिक्षुकस्य द्वारेण राजयात्रां यायादिति दर्शयामि । नान्यत् ।

**राजा**—क्व नु पुरुन्यासः ।

**हेमलेखः**—स्वर्गे । तत्र तस्यान्वेषणाय पुरुषं प्रेषय । यदि तु सन्देशहरस्तत्र तं न पश्यति तर्हि स्थानान्तरे[1] त्वमेव तावन्मृगयस्व । यदि पुनर्मासिनापि तं न पश्यसि तदा बाह्यशालाभिमुखं सोपानश्रेणीमारोहन्नस्य गन्धमुपलप्स्यसे ।

**राजा**—(कतिपयपरिजनं प्रति) यात । तत्र तमन्वेषयत ।

**हेमलेखः**—यावत् तत्र गच्छथ तावदसौ किल स्थास्यति ।

(निष्क्रान्तःपरिजनः ।)

**राजा**—हेमलेख ।

त्वत्साधितस्य दुरितस्य निमित्तमेते
सर्वे यथा वयमतीव विषादिताः स्मः ।
सद्यस्तथैव ननु रक्षणचिन्तया ते
त्वां वत्स सत्त्वरमितोऽद्य विसर्ज्जयामः ॥१४॥

अतः—

---

१ नरक इत्यर्थः ।

सज्जीभव त्वं सुत नौः प्रकल्पिता
वातोऽनुकूलः सुहृदः प्रतीक्षिणः ।
सर्वं हि यत्किञ्चिदपेक्षितं भवे-
दुल्लण्डयात्रोन्मुखमेव तिष्ठति ॥१५॥

**हेमलेखः**—किमुल्लण्डायेति ।

**राजा**—हेमलेख । अथ किम् ।

**हेमलेखः**—साधु ।

**राजा**—तत्तथा यदि त्वमस्मदभिप्रायान् विदितवानसि ।

**हेमलेखः**—अहं खलु स्वर्गिणं पश्यामि य एतान् पश्यति । एहि तावदुल्लण्डाय । दयिते मातः । आमन्त्रये त्वाम् ।

**राजा**—हेमलेख । ननु ते वत्सलं पितरमप्यामन्त्रयस्व ।

**हेमलेखः**—मातरमेवामन्त्रयेऽहम् । पिता माता च पुरुषो जाया च भवतः । पुरुषो जाया चैकमेव शरीरम् । तस्मान्मातरमेवामन्त्रयेऽहम् । एहि ताव-दुल्लण्डाय ।

(निष्क्रान्तः ।)

**राजा**—युवाभ्यां तावत्—

एतस्मा[1]दनुगम्य सत्त्वरमसौ नौपृष्ठमारोप्यता-
मद्यैव क्षणदाक्षणे हृतधियः प्रस्थानमापाद्यताम् ।
कालक्षेपमपास्य भोस्त्वरयतं व्यापारमत्रात्मनोः
सर्वं ह्येतदपेक्षितं यदपरं निःशेषनिर्वर्त्तितम् ॥१६॥

(निष्क्रान्तौ रुजाक्रान्तगूढास्तीर्णौ ।)

भो उल्लण्डराज ।

तव यदि मतमस्मत्प्रेम सौहार्दयुक्तं
किमपि मृगयितव्यं भूयसा शक्तिमत्त्वात् ।
व्रणपदमधुनापि स्वायुधैर्नो नवं ते
त्वमधिबलतया मे स्वेच्छया चेद्विधेयः ॥१७॥

---

१. स्थानादित्यर्थः ।

ततस्त्वया नैतदुपेक्षणीयं
पत्राहितं राजनिदेशवाक्यम् ।
येन त्वया सम्प्रति साधनीयः
श्रीहेमलेखस्य वधोऽस्य सद्यः ॥१८॥

ननु साधयैतदुल्लण्डराज । कुतः । स हि—

मर्मसु ज्वर इवाभितापयेन्
माञ्चिरेण यदि तं न शान्तयेः ।
नान्यथा मम सुखं यथा तथा
नैव मामवति राज्यमीदृशम् ॥१९॥

(निष्क्रान्तः ।)

इति तृतीयं दृश्यम् ।

## चतुर्थं दृश्यम् ।

दीनार्कस्य किमपि समक्षेत्रम् ।

(ततः प्रविशति स्फूर्तवीर्यः कश्चित् सैन्याध्यक्षश्च ससैन्यः प्रयाणव्यापृतः ।)

**स्फूर्त्तवीर्यः**––याहि सैन्याध्यक्ष दीनार्कराजाय मदभिनन्दनमावेदय । ब्रूहिचैनमत्रभवताभ्यनुज्ञातः स्फूर्त्तवीर्योऽत्रभवद्राज्यान्तर्भागेन यथाप्रतिज्ञातं बलं प्रस्थापयितुमभ्यर्थयत इति । समागमदेशञ्च नौ विदितोऽसि । यदि महाराजस्य किमपि नो दर्शनमभिमतं स्याद् वयं तत्रभवतः समक्षमात्मानं निवेदयिष्यामः । तञ्चैवं वेदयितुमर्हति भवान् ।

**सैन्याध्यक्षः**—देव । तथा विधास्ये ।

**स्फूर्त्तवीर्यः**––याहि मृदुतरम् । (निष्क्रान्तः ससैन्यः स्फूर्त्तवीर्यः ।)

(ततः प्रविशति हेमलेखो रुजाक्रान्तो गूढास्तीर्णश्च सहेतरैः ।)

**हेमलेखः**—नन्वार्य्य । कस्यैतद्‌बलम् ।

**सैन्याध्यक्षः**—आर्य्य । नरोहराजस्य ।

**हेमलेखः**—प्रसीदत्वार्य्यः । किमुद्दिश्य प्रयातम् ।

**सैन्याध्यक्षः**—पोलकदेशभागमभिप्रयातम् ।

**हेमलेखः**––आर्य्य । कोऽस्य नायकः ।

**सैन्याध्यक्षः**––वृद्धनरोहराजस्य भ्रातृव्जः स्फूर्त्तवीर्यः ।

**हेमलेखः**––आर्य्य । किं पोलकदेशस्य मूलभागमुत पर्य्यन्तभागमभिप्रयातम् ।

**सैन्याध्यक्षः**––आर्य्य । अतिशयोक्तिपरिहारेण भूतार्थं व्याहरामि चेत्—

**एते वयं प्रयामो भूमेरेकखण्डस्य लाभाय ।**
**न यत्र कश्चिल्लाभः स्व एष इत्यभिधानादृते ।।२०।।**

स्वनामाङ्कितमुद्राणां पञ्चभिर्ननु पञ्चभिरप्यहमेनं न प्रतिग्रहीष्ये । न वासौ नरोहराजाय पोलकराजाय वा स्वाधीनभूमित्वेन विक्रीतोऽप्यतोऽधिकमुत्पादयिष्यति ।

**हेमलेखः**—कथम् । नैनं तर्हि पोलकराजो रक्षिष्यति ।
**सैन्याध्यक्षः**—अये । स खलु पूर्वमेव रक्षितः ।

**हेमलेखः**—भटानां द्वे सहस्रे विंशतिः सहस्राणि च मुद्राणाम् ।
नैनं क्षुद्रविवादं क्वचिद् व्यवस्थापयिष्यन्ति ॥२१॥

स्फोटोऽयमत्यायतवित्तभोगाद्
मदाभिधानो निरुपद्रुतस्य ।
अन्तःसमुच्छ्वासवशादकाण्डे
विनाशयेज्जीवितमप्युदग्रः ॥२२॥

आर्य्य । प्रह्वस्य मे भवते धन्यवादाः ।

**सैन्याध्यक्षः**—आर्य्य । स्वस्ति । (निष्क्रान्तः ।)
**रुजाक्रान्तः**—देव । अपि गमनाय प्रसादं करिष्यति भवान् ।
**हेमलेखः**—अनुपदमागच्छामि । गच्छाग्रतः । (हेमलेखवर्जम् । निष्क्रान्ताः सर्वे)
अहो कथं नु सर्वे वृत्तान्ता ममैवाधैर्य्यं सूचयन्तः स्तिमितप्रायां मे वैरनिर्यातनबुद्धिमुद्बोधयन्ति ।

स नु किंपुरुषो मतः पृथिव्यां
पशुरेवैष समानवृत्तियोगात् ।
शयनोदरपूरणानि यस्य
प्रथमं कार्य्यमथापि मुख्यलाभः ॥२३॥

**वाढं खलु**—

नेयं बुद्धिर्मनसि विहिता ब्रह्मणा व्यायतार्था
संपश्यन्ती यदपि बहुशो भूतभाव्यर्थवस्तु ।
सामर्थ्येनाविहतगतिना दिव्यलोकोचिता नः
कर्मायोगान्मलिनरुचये कल्पिता संक्षयाय ॥२४॥

**अथेदानीम्**—

पशुजनोचितविस्मृतिकारणात्
तदुत भीतवदातुरचिन्तया ।

विपरिणामविचारणगर्भया
धियमुपेक्ष्य भियातिशयानया ॥२५॥

कस्मान्न वेद्मि तदिदं ननु साधनीयं
जीवामि वक्तुमिति चेदधुनापि तावत् ।
यत्रास्ति हेतुरघृणः सममिच्छया मे
द्वारञ्च शक्तिरपि च प्रतिकारसिद्धौ ॥२६॥

पृथ्वीव सुव्यक्ता ह्येते दृष्टान्ता मामुत्साहयन्ति । कुतः । पश्यैनां वाहिनीं यैषा--

राज्ञः पुत्रेण नीता बहुभटरचिता वित्तभूयिष्ठपुष्टा
भोगासक्तेन यूना सुरसुलभयशोलोभदर्पोद्धतेन ।
संग्रामस्यास्य घोरं फलमुपहसता स्वल्पहेतोरपास्य
प्राणान् प्रेष्ठानपीमान् भयमरणजयश्रीपदञ्चाभ्युपेतान् ॥२७॥

महत्वमेवं महतां यथोचित-
महेतुकं नैव महत्प्रवर्त्तनम् ।
तृणाग्रहेतोरपि वैरसाधनं
यशो यदा संशयितं परैर्भवेत् ॥२८॥

एवं स्थितेऽर्थविषये तु कथं स्थितोऽस्मि
तातो हतः कलुषिता जननी च यस्य ।
बुद्धिञ्च मन्युसहितां प्रतिबोधयेद् यत्
तस्मिन् स्थितेऽयमहमस्मि तथा शयानः ॥२९॥

इतश्च क्रीडाहतोऽहं पश्यामि–

योद्धृणां किल विंशतिर्दशशतान्येषां मृतान्याहवे
स्वैरं तत् प्रविशन्ति ये सुमनसो मिथ्यायशस्काम्यया ।

युद्धार्थं नहि तावतां पदमिदं पर्य्याप्तमासादितं
देहादूर्ध्वमपि प्रशान्तमहसामन्त्याश्रयाकाङ्क्षिणाम् ॥३०॥

अहो ।

इतः प्रभृति तावन्मे मनो वधार्थमुद्यतम् ।
भवत्वेव न चेदेवं माभूत् कार्य्यान्तरक्षमम् ॥३१॥

(निष्क्रान्तः ।)

इति चतुर्थं दृश्यम् ।

## पञ्चमं दृश्यम् ।

आलस्यनीडप्रदेशः । दुर्गस्थः कक्षः ।

(ततः प्रविशति राज्ञी होरास्यः कश्चिदार्य्यपुरुषश्च ।)

**राज्ञी**—नाहं तया सह वाग्व्यवहारं करिष्ये ।

**आर्य्यपुरुषः**—सा खलु निर्बन्धशीला विशेषतस्तु व्याक्षिप्तमानसा । एतत्समवस्था च नूनमनुकम्पनीया ।

**राज्ञी**—किं खल्वनया प्रार्थितम् ।

**आर्य्यपुरुषः**—सा बहुशः पितुरभिभाषते ।

ननु जगदिदं मायाच्छन्नं तथेति च भाषते
स्खलितवचनं गाढं वक्षो निजं पुनराहते ।
तृणमपि पथि प्राप्तं पादाहतं कुरुते रुषा
भणति वचनं सन्दिग्धार्थं कथञ्चिदवस्थितम् ।।३२।।

असम्बद्धप्रलपितं खलु तस्या वचनम् । तथापि तस्य व्यस्तप्रयोगोऽपि श्रोतॄनूहापोहकर्मणि नियोजयति ।

तस्यास्ते हि निमेषमूर्द्धचलनस्वाकारसन्दर्शनै-
स्तैस्तैरात्मसमर्पितार्थकलया संयोजयन्तो वचः ।
निःसन्दिग्धतया पदार्थविरहेऽप्येतैर्निमित्तैर्विदुः
पापं कर्म हि तत्र किञ्चन भवेद् विज्ञातमेवानया ।।३३।।

**होरास्यः**– वरं सम्भाषणीया न चेद्बाला तद्बुद्धिं विनापि ।
चेतःसु पापात्मनां सशङ्कं तर्कमुद्भावयेत् ।।३४।।

**राज्ञी**—प्रवेशयैनाम् । (निष्क्रान्तो होरास्यः ।)

विधुरमिति मे तावत्पापस्वभावतया मनो
यदपि यदपि स्वल्पं घोराहितं किल शङ्कते ।

भवति दुरितं शङ्काप्रायं तथैव हि तादृशां
स्फुटमिह भवेदित्याध्मातं यथा स्फुटति स्वयम् ॥३५॥

(ततः पुनः प्रविशति होरास्य उपालया सह ।)

**उपाला**—क्व नु स कान्तो दीनार्केश्वरः ।
**राज्ञी**—कथमिदानीमुपाले ।

**उपाला**— कथमिह तव विद्यां प्रेममय्यालयान्तं
यदि चलमपरं स्यात् तत्ततः[1] संविभज्य ।
भवति यदिह दण्डः[2] शुक्तिगर्भं शिरस्त्र-
मथ च चरणकोषी किं नु विद्यांमनेन ॥३६॥

**राज्ञी**—हा सुभगे भवति । को नु खलु ते गीतार्थः ।
**उपाला**—किमाह भवती । नहि । नन्ववधारयतु तावत् । (गायति ।)

भवति[3] स हि चिराय ग्रस्यते मृत्युना स्म
किमपि सहि चिराय ग्रस्यते मृत्युना स्म ।
उपरतवरशीर्षे राजते शष्पभूमि-
रथ चरणयुगेऽस्य प्रस्तरस्यैकखण्डः ॥३७॥

**राज्ञी**—मा तावत् । किमिदमुपाले ।
**उपाला**—नन्ववधारयतु तावत् । (गायति ।)

क्षितिधरहिमशुभ्रं प्रेतवस्त्रञ्च तस्य—

(ततः प्रविशति राजा ।)

**राज्ञी**—अहोबत । इह खलु पश्यतु देवः ।

---

१ तत्त्वत इत्यपि ध्वनिः ।
२ इत्यादिः परिव्राजकस्य प्रणयिनश्च वेषः ।
३ इति सम्बोधनम् ।

**उपाला**—विशदमधुरपुष्पैः सर्वतः शोभमानम् ।
शवमनुगतमासीदश्रुभिर्गाढसिक्त—
मविरलगुरुधारैः सत्यसौहार्दभाजाम् ॥३८॥

**राजा**—सुतनु भवति । कथं नु भवती ।

**उपाला**—अये । ईश्वरस्ते पारितोषिकं ददातु । उलूका किलापूपिकस्य दारिकासीदित्याहुः[१] । देव वय खलु जानीमहे के वयमिति । न तु जानीमहे के वयं भवेमेति । आहारवेलायां तवेश्वरः सहायो भवतु ।

**राजा**—पितुरनुचिन्तनमेतत् ।

**उपाला**—प्रसीद । अलमेतावत्कथानुबन्धेन । यदा तु किमेतदिति ते पृच्छन्ति तदैवं कथयतु भवान् । (गायति ।)

ननु परदिवसोऽसौ साधुभालन्तनीय-[२]
स्तदरुणितविभाते वल्लभाकाङ्क्षयाहम् ।
तव सुभगगवाक्षे कन्यकात्मा भवेयं
दयितवर यथा ते स्निग्धभालन्तनाहम्[३] ॥३९॥

**राजा**—कष्टं सुतनुरुपाला । कियच्चिरमेषैतदवस्था संवृत्ता ।

**उपाला**—आशंसे खलु सर्वं शुभं स्यादिति । कामं नो धैर्यमवलम्बनीयम् । किन्तु स हि तैः शीतले भूगर्भे रक्षित इति ध्यायन्ती न खलु शक्नोम्यात्मनोऽश्रूणि निवारयितुम् । मदीयो भ्राता चैतदवश्यं ज्ञास्यति । अतः सदुपदेशाय ते धन्यवादाः । एहि तावच्छिक्षक । सुरात्रिर्भवतीभ्यः । सुरात्रिः सुभगाभ्यो भवतीभ्यः । सुरात्रिः सुरात्रिः । (निष्क्रान्ता ।)

**राजा**—अनुपदमेवानुसरैनाम् । साधु चैनामवेक्षितुमर्हसि ।

(निष्क्रान्तो होरास्यः ।)

---

१ सा किल कृष्टायापूपमददती तच्छापादुलूकारूपेण परिणतेति कथानुसन्धेया ।

२ भालन्तनाख्यः साधुः ।

३ तद्वत् साध्वी प्रणयास्पदञ्च ।

अहो ।

उच्छ्वासवद् विषमिदं गुरुदुःखजन्यं
दुःखञ्च तत् पितृविनाशनिमित्तमस्याः ।

अयि गर्त्तरुदे गर्त्तरुदे ।

नायान्ति कस्यचिदिमानि हि केवलानि
दुःखानि नूनमपरैरनुबन्धवन्ति ।।४०।।

तथाहि ।

तातस्तावद् हतोऽस्यास्तदनु तव सुतः स्वात्मदोषात्प्रसह्य
राज्यादस्माद् विधाय प्रतिभयकलुषं हन्त निर्वासितश्च ।
लोको नानाप्रतर्कः सुचरितमरणाच्छङ्कया विप्लुतश्च
धीविश्रान्तञ्च शीघ्रं रहसि च निहितो भूमिगर्भे सखा नः ।।४१।।

तथा च कन्यास्य पितुस्तपस्विनी
स्वबुद्धियोगाद् बलवद् वियोजिता ।
यमेव हित्वा प्रतिमागता यथा
जनाः समस्ताः पशवोऽपि वा मताः ।।४२।।

अवसाने पुनरेतत्समस्तवृत्तान्तार्थानुबन्धितयास्या भ्राता प्रांशुदेशान् निभृतं प्रत्यावृत्तः—

आश्चर्य्यं किल चिन्तयन्निदमसौ दूरे स्वयं तिष्ठति
भूयांसश्च कथाप्रजल्पकगणास्तत्पार्श्वसञ्चारिणः।
ये भूतार्थमृतेऽपि कल्पितगुरुप्राणापहारात्मना
दोषेणाद्य परस्परं जनमिमं संदूषयन्ति ध्रुवम् ।।४३।।

अहो प्रिये गर्त्तरुदे ।

कौलीनमिदमेतावद् गोलासनमिवाञ्जसा ।
बहुप्रवादगोलान्तं बहुधा हन्ति मां दृढम् ।।४४।।

(नेपथ्ये कलकलः ।)

**राज्ञी**—अहह । कुतोऽयं शब्दः ।
**राजा**—क्व नु खलु मे सुविशदेश्या[1] रक्षिणः । ते तावद् द्वारं रक्षन्तु ।

(ततः प्रविशति कश्चिदार्य्यपुरुषः ।)

का प्रवृत्तिः ।

**आर्य्यपुरुषः**—देव । आत्मानं रक्षतु भवान् । कुतः ।

समुद्रोऽप्युद्वेलः प्रसरति यदा स्फीतसलिल—
स्तथा नैव क्षिप्रं समतलभुवं प्लावयति सः ।
यथा लीढास्योऽसौ तुमुलजनतामूर्द्ध्नि विचरन्
समग्रेभ्यो युष्मत्समरपुरुषेभ्यः प्रभवति ॥४५॥

तं राजानञ्च लोको वदति बहुविधं हीनबुद्धिप्रकाशः
सर्गारम्भे यथेदं विरहितमखिलं स्वाधिकारप्रवादैः ।
लीढास्यो नोऽस्तु राजा तदिदमभिमतं स्वानुमत्या तथेति
कण्ठारावं शिरस्त्रं क्षिपति च गगने हस्ततालञ्च भूयः ॥४६॥

लीढास्यो नोऽस्तु राजा लीढास्यो नोऽस्तु राजेति ते किलोत्क्रोशन्ति ।

**राज्ञी**—किमपि हि मिथ्यापदवीमासाद्य नदन्ति सम्मदाविष्टाः ।
प्रतिमार्गमेनं वित्त दीनदेश्यमिथ्याश्वाधमाः ॥४७॥

**राजा**—द्वारं तावद् भग्नम् । (नेपथ्ये कलकलः ।)

(ततः प्रविशति सायुधो लीढास्योऽनुपदञ्च दीनपुरुषाः ।)

**लीढास्यः**—क्वासौ राजा । भद्रमुखाः । बहिःस्थातुमर्हथ यूयम् ।
**दीनपुरुषाः**—मा मैवम् । वयमप्यन्तः प्रविशाम ।
**लीढास्यः**—प्रसीदत । मामेव प्रवेशायानुमन्तुमर्हथ ।
**दीनपुरुषाः**—अनुमन्यामहे । अनुमन्यामहे । (द्वाराद्बहिरपसरन्ति ।)

---

१ तद्देश्याः ।

**लीढास्यः**—अनुगृहीतोऽस्मि । द्वारं तावद् रक्षत । अयि भो नीचराज । प्रत्यर्पय मे पितरम् ।

**राज्ञी**—भद्र लीढास्य । शान्तम् । शान्तम् ।

**लीढास्यः**—अतः परमपि मे—

**शान्तञ्चेद् रुधिरं ततः प्रकथयेत् पुत्रं हि मां जारजं**
**विद्वांसं पितरञ्च मे तमसतीभर्त्तारमुद्घोषयेत् ।**
**मातुश्च स्वपतिव्रताशुभकुलेष्वग्रेसराया मम**
**भ्रूमध्ये किल पुंश्चलीयमिति संशुद्धे पुनर्निर्दिशेत् ॥४८॥**

**राजा**—लीढास्य । किंनिमित्तं तेऽयं राजाभिद्रोहो भीमविग्रहोचित इव प्रतिभाति । गर्त्तरुदे । मुच्यतामेषः । अलं नः कृते शङ्कया । कुतः ।

**दैवेनैवं रक्ष्यतेऽयं नरेन्द्रो**
**लोकद्रोहस्तद् यथा भाव्यमानः ।**
**अस्मिन्नीषत् कोपदृष्टिं वितन्व-**
**न्नप्यारम्भे सीदति क्षीयमाणः ॥४९॥**

कथय मे लीढास्य कुतो नु त्वमेवं प्रकुपितोऽसि । गर्त्तरुदे । मुच्यतामेषः । ननु कथय माणवक ।

**लीढास्यः**—क्व मे पिता ।

**राजा**—मृतः ।

**राज्ञी**—न खल्वनेन ।

**राजा**—कार्त्स्न्येनायमभियोगमावेदयतु ।

**लीढास्यः**—कथं खलु स मृतः । नाहमत्र विमोहयितव्यः । कुतः ।

**त्वद्वश्यभाव इति मे नरकाय दिष्टो**
**भूताय घोरविधये प्रणयाक्षराणि ।**
**धर्मस्य धीरपि रसातलगह्वराय**
**काङ्क्षाणि शश्वदपि वा निरयाभिशापम् ॥५०॥**

एतावति खल्वहं स्थितोऽस्मि ।

लोकेऽत्र काचिदपरत्र च मे न चिन्ता
यद् भावि तद्भवतु यद्यशुभं शुभं वा ।
युक्तस्तथैव विदधामि यथा समग्रं
वैरस्य मे गुरुवधे प्रतिमोचनं स्यात् ॥५१॥

**राजा**—कस्त्वां निवारयेत् ।

**लीढास्यः**—इच्छैव मे जगदिदं परिभूय सर्व—
मात्मानमद्य शमयेद् यदि वा न वेति ।
तत्साधनानि च तनूनि तथा प्रयोक्ष्ये
क्षिप्रं यथा प्रतिफलं बहु साधयन्ति ॥५२॥

**राजा**—भद्र लीढास्य । अवश्यं यदि वत्सलस्य गुरोर्वधहेतुं निश्चयेन ज्ञातुमिच्छसि—

किं वैरप्रतिकृतिसाधने तवेष्टो
व्याघातः परमसखस्य वैरिणश्च ।
द्यूताक्षे जयमजयं यथानवेक्ष्य
संरम्भादुभयपणार्थिनो जनस्य ॥५३॥

**लीढास्यः**—वैरिण एव केवलं प्रार्थ्यन्ते ।

**राजा**—किं तर्हि तान् वेत्स्यसि ।

**लीढास्यः**—एवं तर्हि—

परमसुहृदो बाह्वोर्मध्ये पितुर्निदधाम्यहं
प्रणयिहृदयांस्तांश्च प्राणैश्चिरं प्रतिपालयन् ।
जलचर इव स्नेहात्पक्षी पुरो निजशावकान्
हृदयरुधिरैः प्रत्यग्रैस्तत्कृपाश्रितजीवितान् ॥५४॥

**राजाः**—कथम । त्वमिदानीं दृढभक्तिः पुत्र इव सत्यं खलु कुलीन इव च भाषसे ।

निष्पापोऽहं तव खलु पितुः प्राणसंहारवृत्तौ
गाढं दुःखैरिह च गुरुभिः कातरत्वं गतोऽस्मि ।
बुद्धिग्राह्यं तदिदमधुना भूयसा सत्यवृत्तं
प्रत्यक्षस्ते समगुणतया वासरोऽयं यथा स्यात् ॥५५॥

**दीनपुरुषाः**--(नेपथ्ये) एषा प्रविशतु ।
**लीढास्यः**--कथमिदानीम् । को नु खल्वयं शब्दः ।

(ततः पुनः प्रविशत्युपाला ।)

भो सन्ताप विशोषयोष्मभिरिदं कृत्स्नं मदीयं शिरो
बाष्प क्षारतया च मे नयनयोः शक्तिक्रिये नाशय ।
दैवेनाद्य शपे तव[1] प्रतिफलं दास्यामि धीविप्लवे
यावन्नः प्रतिकार्य्यसमाकुलधियो दुःखानि तेऽतिक्रमेत् ।।५६।।

हा यौवनाग्र्यकलिके प्रियबालरूप
उपालिके सुमधुरे प्रियसोदरे च ।
हा दैवमद्य यदि जीवितवज्जडस्य
नश्येद् मतिर्नवतमापि च बालिकायाः ।।५७।।

ललितललित एव गाढबन्धः
प्रणयिषु यो भवति स्फुटं स्वभावः ।
अनुदिशति मृताय वल्लभाय
स ललितमेव हि लक्षणं तदीयम् ।।५८।।

**उपाला**--(गायति)

किमपि शिविकया ते मुक्तवक्त्रं तमूहु-
र्नहि न हि चिरमक्ष्णोर्नैव यो गोचरो नः ।
तदभवदभिवृष्टं स्थानमश्रुप्रवाहैः--

आमन्त्रये त्वां ललित ।

**लीढास्यः**--यदि नाम त्वं प्रकृतौ स्थिता प्रतिहिंसाविधानाय मामनुप्रेरये-स्तथापि नाहमेवमुद्बोधितो भवेयम् ।

**उपाला**--(गायति)

---

१. उपालामुद्दिश्येति बोध्यम् ।

**अध इति ननु गीतैस्तं निदध्यादधोऽधः ।।५९।।**

अहो। कथं खलु चक्रं नामैतेन[1] युज्यते। स किल मिथ्याकार्य्याधीशो येन भर्त्तृदारिकापहृता[2] ।

**लीढास्यः**—एतदसम्बद्धमपि सम्बद्धाद् बहु मन्तव्यम् ।

**उपाला**—एषा प्रणयौषधिः संस्मरणार्था । प्रसीद[3] । दयित । स्मर्य्यतामयं जनः । एषाप्युत्कण्ठाकुसुमौषधिः समुत्कण्ठानिमित्ता ।

**लीढास्यः**—सोन्मादभावोऽप्युपदेशभूतोऽयं यदुत्कण्ठा स्मरणञ्च सुष्ठु योजिते।

**उपाला**—एषा त्वदर्थं[4] पुनश्चाटुवादकुसुमौषधिरविश्वासौषधिश्च । एषापि त्वदर्थं[5] विषादौषधिः । एषा पुनर्मदर्थम्। एषा खलु रविवासरप्रसादौषधिरिति शक्यं वक्तुम्। हन्त। त्वया[6] खलु विषादौषधिरेषा सप्रभेदं धारयितव्या। एतच्च[6] विप्रलम्भकुसुमम्। तुभ्यञ्च[6] कानिचिद् विश्वासकुसुमान्यहं ददानि यदि तानि पितुर्मरणेन न नश्येयुः। स हि निर्वाणमुपगत इत्याहुः। (गायति) स हि सुभगरवीन्द्रो[7] बद्धहर्षः प्रियो मे—

**लीढास्यः**—विषादः शोको विकारः साक्षाच्च नरकयातनेत्यतोऽप्येषा प्रसादं विलोभनञ्च कामयते।

**उपाला**—(गायति)

**किमयि बत गतोऽसौ सन्निवृत्त्यै न भूयः**
**किमयि बत गतोऽसौ सन्निवृत्त्यै न भूयः ।**
**नहि नहि चिरयातो याहि मृत्युञ्च तावद्**
**यदयि बत गतोऽसौ सन्निवृत्त्यै न भूयः ।।६०।।**

---

१. गीतेनेत्यर्थः ।

२. सा किल चक्रभ्रमेण परिणतेति गाथानुसन्धेया ।

३. हेमलेखत्वेन भाव्यमानं लीढास्यमुद्दिश्येति बोध्यम् ।

४. क्लेदासमुद्दिश्येति बोध्यम् ।

५. गर्त्तरुदामुद्दिश्येति बोध्यम् ।

६. होरास्यमुद्दिश्येति बोध्यभ् ।

७. कश्चिद् गाथानायकः ।

तुहिनविशदरूपं श्मश्रु तस्य प्रवृद्धं
किमपि च शिरोऽस्य क्षौमशुभ्रप्रकाशम् ।
चिरमयि स हि यातः किं नु तत्र प्रलापै-
रुपरतवरपुंसे स्वस्ति भूयाच्चिराय ।।६१।।

अथ सर्वेभ्यश्च क्रुष्टीयेभ्य इति प्रार्थये । स्वस्ति ।

(निष्क्रान्ता ।)

**लीढास्यः**—हा ईश्वर । किमेतत् पश्यति भवान् ।

**राजा**—लीढास्य । अवश्यं मया तव शोकस्य सहभागिना भवितव्यम् । अन्यथा ममात्माधिकारमपहरसि । अथ त्वमेकान्ते गत्वा तव सुहृदां मध्ये विज्ञतमान् कांश्चिद् वरयस्व ये खलु तव च मम च वचनं श्रुत्वा विचारयन्तु । ततश्च—

विचारे साक्षाद्वा स्ववशपुरुषेणापि यदि वा
वयं स्पृष्टाः पापैरिति भवति तेषामभिमतम् ।
तदा राज्यं प्राणान् सपदि वरसिंहासनमिदं
प्रदास्यामस्तुभ्यं परमपि च शान्त्यर्थमखिलम् ।।६२।।

त्वमन्यथा धैर्य्यबलं समाश्रितो
वचो मम श्रोतुमिहार्हसि ध्रुवम् ।
तथैव यत्नं विदधे यथा भवा-
नितः परां शान्तिमुपैष्यति स्वयम् ।।६३।।

**लीढास्यः**—तथास्तु ।

मृत्योः कोऽस्य प्रकारः किमिति च निलयः स्तब्धमापादितोऽभूद्
यत्राचारोत्सवो वा पदसुलभविधिर्वापि नापेक्षितश्च ।
नासिर्न्यस्तो न चान्यद् यदहितविजये लक्षणं वा कुलस्य
सर्वं तावद् दिवोऽयं प्रणदति खलु मां वेदितव्यं त्वयेति ।।६४।।

राजा— तत्तथा त्वमधुनैव वेत्स्यसि
विद्यते शिरसि यस्य पातकम् ।
घोरदण्डविधिना स एव नो
नाशमेतु चिरमद्य मानवः ॥६५॥

प्रसीद । एहि तावन्मया सह ।

((निष्क्रान्तौ ।)

इति पञ्चमं दृश्यम् ।

## षष्ठं दृश्यम् ।

तत्रैव दुर्गे कक्षान्तरम् ।

(ततः प्रविशति सप्रेष्यो होरास्यः)

**होरास्यः**—कीदृशास्ते पुरुषा ये मम दर्शनं प्रार्थयन्ते ।

**प्रेष्यः**—आर्य्य । एते खलु नाविका भवत्पत्रमादायोपस्थिताः ।

**होरास्यः**—प्रवेशयैतान् ।

(निष्क्रान्तः प्रेष्यः ।)

**न जाने खलु लोकेऽस्मिन्नभिनन्द्योऽस्मि केन वा ।**
**यो न राज्ञः कुमारोऽसौ हेमलेखो भवेदिति ॥६६॥**

(ततः प्रविशन्ति नाविकाः ।)

**प्रथमो नाविकः**—आर्य्य । स्वस्ति भवते ।

**होरास्यः**—तुभ्यमपि स्वस्ति भूयात् ।

**प्रथमो नाविकः**—ईश्वरप्रसादश्चेत् तथैव स्यात् । आर्य्य । यथाहं विज्ञापितो यदि होरास्याभिधानो भवानेतद् भवतः पत्रमुल्लण्डगामिना राजदूतेन विसर्ज्जितम् ।

**होरास्यः**—(वाचयति) होरास्य । एतत्पत्रमनुवाच्य राजोद्दिष्टपत्रहस्तानिमान् पुरुषान् केनाप्युपायेन राजसन्निधानं प्रापय । यावन्न समुद्रयात्रायां वासरद्वयमतिक्रान्तं तावद् युद्धसम्भारसंभृता सामुद्रिकदस्यूनां नौरस्मानभ्यधावत् । ततोऽतिस्तिमितगतिमस्मन्नावमुपलभ्य वयं बलाद् वीर्य्यप्रदर्शने प्रवर्त्तिताः । संग्रहे च यावत् तन्नावमारुढस्तावदस्मन्नावोऽपसृत्य तैरहमेकाकी बन्दिग्राहं गृहीतः । ते च मय्यनुक्रोशकारिणो दस्यव इव वस्तुतस्तु मयापि तान् प्रति प्रत्युपकारो विधेय इति बुद्ध्यावर्त्तन्त । मया विसर्ज्जितं पत्रं राज्ञो हस्तमुपनय । आत्मना च त्वं तावता वेगेन मामभिसर्त्तुमर्हसि यावता मृत्योर्दंष्ट्रान्तरादपसरेः । ततः—

कर्णे ब्रूयां पदानि यानि ते मौनं साधयिष्यन्ति ।
तथापि स्वमात्राभ्यो गच्छेयुस्तानि किल लघुताम् ॥६७॥

इमे च माणवकास्त्वां तत्र नेष्यन्ति यत्राहमवस्थितः रुजाक्रान्तगूढास्तीर्णे पुनरुल्लण्डगामिनावेव भवतः। तावधिकृत्य बहु ते कथयितव्यमस्तीति यं भवानात्मीयं जानाति तस्य हेमलेखस्येति ।

तदेहि तावत् त्वरयैव यत्त्वया
नृपाय पत्रं खलु दापयामि ते ।
यथा च मां तस्य पुरो नयिष्यसि
यतस्त्वयासादितमेतदञ्जसा ॥६८॥

(निष्क्रान्ताः ।)

इति षष्ठं दृश्यम् ।

## सप्तमं दृश्यम् ।

तत्रैव दुर्गे कक्षान्तरम् ।

(ततः प्रविशति राजा लीढास्यश्च ।)

**राजा**—निष्पापं खलु मां गुरोस्तव वधे बुध्यस्व बुद्धयानया
मित्रञ्चैव सखे सदा विगणयेर्मामात्मनश्चेतसा ।
वृत्तं यन्निखिलं त्वया श्रुतमिदं धैर्यान्मया कीर्त्तितं
तातो येन हतो हि ते स तु चिरं मां हन्तुमभ्युद्यतः ॥६९॥

**लीढास्यः**—तथा स्फुटं प्रतीयते। कथय खलु माम्—

कस्मात्पापमिदं कुमारविहितं तत्तत्पुरा घातकं
राज्ञापि प्रतिकारकार्य्यविधिना नैव त्वया शोधितम् ।
रक्षार्थं प्रसमीक्ष्य ते शुभधिया शेषैस्तथा हेतुभि-
स्तत्तत्साधयितुं तदा त्वमभवो यत्तीक्ष्णमुद्बोधितः ॥७०॥

**राजा**—अये। तत्र खलु द्वे सविशेषनिमित्ते स्तः । ते तुभ्यं परिदुर्बलतया भासमाने अपि मयि तु बलवत्तरे भवतः । तत्राद्यं तावत्—

पुत्रालोकेन माता मम वरमहिषी जीवितं धारयन्ती
दिष्ट्या वा भाग्यदोषात् प्रभवतु यदि वा हेतुरेकस्ततोऽस्तु ।
सेयं प्राणैर्मदीयैर्विहितपरिचया चेतसापि प्रकामं
त्यक्तुं कक्षेव शक्या कथमपि न मया ज्योतिषेवान्तरीक्षे॥७१॥

अपरञ्च निमित्तमेतद् येन मया प्रकाशविचारोऽस्य न शक्यग्रहोऽभवत् —

यदितरजनस्तस्मिन् धत्ते सुनिर्भरसौहृदं
प्रबलदुरितं तस्यासिञ्चन् स्रवद्रासधारया ।

सुभगसलिलः कूपो दारुं शिलीकुरुते यथा[1]
दृढनिगडमप्येनं कुर्य्यात् प्रसादविमोचितम् ॥७२॥

एवं स्थिते--

तद्दण्डघोरविधयश्च मया प्रयुक्ता
मामेव हन्युरभिलङ्घ्य निवर्त्तमानाः।
प्रोच्चण्डवायुदलने तनुदारुदेहा
निर्बुद्धिमुक्तविशिखा इव शून्यलक्ष्याः ॥७३॥

**लीढास्यः**—इत्थं तातो मम खलु हतो वैरिणासौ महात्मा
कष्टप्रायामपि च भगिनी स्वामवस्थां प्रपन्ना।
पूर्वावस्थाहितवरगुणैर्हन्त तत्तद्विशेषै-
र्या सर्वेषामुपरि सततं भाति सर्वानवद्या ॥७४॥

वैरनिर्यातनं खलु मे भविष्यति।

**राजा**—मा खलु तदर्थमात्मनः स्वप्नं लङ्घय।

मा त्वं विचिन्तय तथा वयसात्मदेहे
निस्तेजसो जडधियश्च कृता विधात्रा।
दृष्ट्वा स्थितामभिमुखीमपि घोरशङ्कां
धैर्य्याद् यथैष परिहास इति ब्रवाम ॥७५॥

अचिरादेव त्वमतोऽपरं श्रोष्यसि।

तव पितरि मम प्रीतिस्तथात्मनि चैव नो महती प्रीतिः।
आशंसे तदेव ते ध्रुवमिह बोधाय स्यादिति ॥७६॥

(ततः प्रविशति वार्त्ताहरः।)

कथमिदानीम्। का वार्त्ता।

**वार्त्ताहरः**—देव। इमौ लेखौ हेमलेखात् प्राप्तौ। अयं देवाय प्रेषितः। अयञ्च देव्यै।

---

१. अत्र लोकवार्त्तानुसन्धेया।

**राजा**—किं हेमलेखादिति । केनोपनीतौ ।

**वार्त्ताहरः**—देव । नाविकैरिति किल कथ्यते । न खलु ते मयावलोकिताः । इमौ येन पुरुषेणोपनीतौ ततो गृहीत्वा वलेद्येन[1] मम हस्तं प्रापितौ ।

**राजा**—लीढास्य । एतौ त्वयावश्यं श्रोतव्यौ । विसर्ज्जयास्मान् ।

(निष्क्रान्तो वार्त्ताहरः।)

(वाचयति) ईश्वर । प्रभविष्णो । विदितमस्तु भवद्विषयेऽहमशरणो विसर्ज्जितः । श्वः किलाहमात्मानं भवतो राजनयनयोर्गोचरं कर्तु-मभ्यर्थये यदा भवदभ्यनुज्ञापूर्वमहं कथन्म आकस्मिकं ततोऽपि च चित्रं प्रत्यागमनमित्यस्य निमित्तं निवेदयिष्यामीति हेमलेख-स्येति । ननु किमनेन सूच्यते । अपि नाम शेषोऽपि परिजनः प्रत्यागतः । अथवा च्छलप्रबन्धोऽयं न खलु तथेति ।

**लीढास्यः**—भवानस्य हस्ताक्षरं जानाति ।[2]

**राजा**—हेमलेखस्यैव स्वाक्षरमिदम् । नन्वशरण इत्याह । इह च लेखशेष[1] एकाकीत्याह । अप्युपदेशे शक्नोपि ।

**लीढास्यः**—**मूढोऽस्मि देव विषयेऽत्र स एतु ताव-**
**देतत्पुनर्हरति मे हृदयस्य तापम् ।**
**वक्ष्यामि तस्य पुरतो यदिहाद्य जीव-**
**न्नित्थं त्वमेव कृतवानिति दीप्तशब्दान् ।।७७।।**

**राजा**—लीढास्य । यदि तथा भवेत्—कथं नु खल्वेतद् भवेत् । कथं पुनरन्यथा-किं मे शासने स्थास्यसि ।

**लीढास्यः**—देव । अथ किम् । यदि भवान् शान्तौ वलान्मां न स्थापयति ।

**राजा**—आत्मनस्ते शान्तौ स्थापयामि ।

**यदि विचलितस्तद्यात्रायाः कुतोऽपि नृपात्मजो**
**भवति च ततः प्रत्यावृत्तोऽपुनर्गमनाय सः ।**

---

१. तदाख्येन पुरुषेण ।
२. इति काकुः ।

कथमपि मया सञ्चोद्योऽसौ महायुधचेष्टिते
मम परिणते बुद्धयां यत् स्यादरेध्रु वनाशनम् ।।७८।।

तथा सति—

कलङ्कशब्दोऽस्य वधस्य कारणा-
न्न विन्दुमात्रोऽपि च नो भविष्यति ।
असंशयात् सा जननी च वत्सला
न दैवयोगादिति तं न वक्ष्यति ।।७९।।

**लीढास्यः**—देव ।

शासने तव तिष्ठामि शक्यश्चेदुपायस्त्वया द्रष्टुम् ।
यथाहं भवेयं नृप साधकस्याद्य तव साधनम् ।।८०।।

**राजा**—स च यथायथमापतेत् ।

इतः प्रवासात् परतो जनैर्भवान्
पुरः कुमारस्य मुहुः प्रशंसितः ।
गुणाय ते सर्वगुणेषु यः पुन-
र्विभाति भूम्नेति मतञ्च कीर्त्तितम् ।।८१।।

नासौ तथा ते गुणसन्निपातो
द्वेषाय तस्याभवदग्र्यरूपः ।
यथायमेकः स गुणो गुणेषु
यो हीन एवेति मतं मदीयम् ।।८२।।

**लीढास्यः**—देव । को नु स गुणः ।
**राजा**—यौवनश्रियः कोऽपि स गुणः । परमुपयोगी च । यतः ।

वयोमध्यं तावन्न खलु लघुना वेषविधिना
विहारार्थेनेदं न रुचिमधिकां पुष्यति तथा ।

वयः शान्तं लोके किमपि पशुरोमाम्बरयुजा
यथाकल्पेनस्वं कुशलमथ धैर्य्यञ्च दधता ॥८३॥

इह च मासद्वयात् पूर्वं नर्मण्यप्रदेशात् कश्चिदार्य्यपुरुषः प्राप्तो मयावलोकितश्च। प्रांशुदेशीयैः सह मया संग्रामः कृतः। तेषां खलु हयारोहे परमं नैपुणम्। अस्य तु वीरपुरुषस्य तत्र मायाविद्याधिकार इवासीत्। तथाहि।

पर्य्याणकीलित इवायमनल्पदाक्ष्याद्
बाहेन चित्रवबलितानि तथा चकार।
अर्द्धार्द्धभाग इव तेन यथार्द्धबाहो
भयिष्ठमर्द्धमनुजश्च बभूव वीरः ॥८४॥

किञ्च।

स तथैव तदा व्यलङ्घयद्
हयदाक्ष्यं किल कल्पितं मया।
बलितं परमाहितं यथा
समतिक्रम्य कृतेन संस्थितः ॥८५॥

**लीढास्यः**—किं नर्मण्यदेशीयः सः।

**राजा**—नर्मण्यदेशीयः।

**लीढास्यः**—प्राणैः खलु शपे लोमन्द एषः।

**राजा**—स एव।

**लीढास्यः**—सुष्ठु खलु विदितो मया। स हि वक्षोभूषणं सर्वलोकस्य मौलिरत्नञ्च।

**राजा**—तेन खलु तव दाक्ष्यमङ्गीकृतम्। तथाहि।

वृत्तान्तश्च तव प्रभुत्वपिशुनो रक्षाविधौ संगरे
ज्ञानं वा विनियोगकर्म यदि वा निर्दिश्य तेनोदितः।
खड्गे तत्र विशेषतः स हि यथा प्रोच्चैर्बभाषे वच-
स्तुल्यश्चेदिह लभ्यते किमु तयोर्द्वन्द्वं भवेद् योधिनोः ॥८६॥

स च शपथञ्चकार—

ये चासियुद्धनिपुणा विषये मदीये
तेषामसौ यदि भवेत् प्रतिपक्षभूतः ।
रक्षाविधौ सरभसञ्च पराभियोगे
संतीक्ष्णदृष्टिरचने च न ते समर्थाः ॥८७॥

आर्य्य ।

वृत्तान्तोऽसौ श्रवणविषयं प्रापितो राजसूनो-
र्गाढोद्वेगं विषमिव मनः साभ्यसूयञ्चकार ।
तस्मात् किञ्चित् परमभिमतं प्रार्थितं तस्य नासीत्
प्रत्यावृत्तस्त्वमसि सहसा तेन चेत् स्पर्धमानः ॥८८॥

अतश्च—

**लीढास्यः**—देव । किमतः ।

**राजा**—लीढास्य ।

अपि प्रियस्ते गुरुरास वत्सलः
सशोकमस्यापि च कृत्यमिच्छसि ।
सशोकचित्रार्पित एव नात्मना
मुखेन शोकार्त्त इवापि लक्ष्यसे ॥८९॥

**लीढास्यः**—कथं न्वेवं पृच्छसि ।

**राजा**—न शङ्के स्नेहस्ते पितरि परमो नाभवदिति
परं स्नेहः पुंसः कथमपि हि कालेन भवति ।
यथा दृष्टान्तेषु स्फुरति बहुशस्तेषु विततं
रसं स्नेहस्यासौ पिबति खलु कालस्तनुभृतः ॥९०॥

स्नेहदीपस्य मध्ये तु विद्यते कालवर्त्तिका ।
क्रमाद् दग्धतया या च शमयेद् दीपमात्मनः ॥९१।

सदपि किञ्चिदिह स्थितये चिरं
स्थिरतया न भवेदविवर्त्तितम् ।

उपचितं सदपि स्थिरसंक्षयं
व्रजति तूपचयात् पुनरात्मनः ॥६२॥

यथाहं पश्यामि विधित्सितं खलु विधित्साकाल एव विधातव्यम्। कुतः।

तद्बुद्धिः परिवर्त्ततेऽनुभवति क्षेपक्षयांस्तावतो
यावन्तः प्रभवेयुरन्यवचनव्याघातदैवोदयाः।
एतत् कार्य्यमभूदिति प्रविततं तच्चित्तसन्तापजं
गाढं निःश्वसितं विमोचनमपि प्राणापहारं मतम् ॥६३॥

मूले क्षतस्य यदि तस्य विशोधनीयं
राज्ञः सुतो द्रुतमसौ प्रतिवर्त्तमानः।
पुत्रो गुरोरिति निदर्शयितुं न वाक्यैः
कृत्यैः किमेनमधिकृत्य चिकीर्षसि त्वम् ॥६४॥

**लीढास्यः**—धर्मस्थानेऽस्य कण्ठं छेत्तुमिति।

**राजा**—न खलु किमपि स्थानं धर्माश्रय इति वधस्य निवारकं भवितुमर्हति। वैरनिर्यातनञ्च निर्मर्य्यादमेव भवेत्। किन्तु भद्र लीढास्य। अपि भवानात्मानं स्वकक्षे रोत्स्यति। अपि भवानेतत् करिष्यति। प्रत्यावृत्तो हेमलेखस्त्वमपि गृहं प्रत्यागत इति ज्ञास्यति। ततश्च—

त्वद्वैशिष्ट्यगुणप्रशस्तिपुरुषान् संयोजयामो वयं
ये तत्प्रांशुभटोदितं द्विगुणितं कुर्य्युर्यशस्तावकम्।
लक्ष्यार्थं कथयामि चेन्ननु युवां द्वन्द्वे प्रचोद्य स्थिर-
मन्योऽन्यस्य जये समेत्य विपणं कुर्य्याम निःसंशयम् ॥६५॥

तत्र च—

चिरादुदासीनतया नृपात्मज-
स्तथैव दाक्षिण्यगुणाद्विशेषतः।
छलप्रबन्धेष्वनभिज्ञमानसो
नियुद्धखड्गं न निरूपयिष्यति ॥६६॥

तथानायासेन त्वमपि विदधद् व्याजमथवा
गृहीत्वा खड्गञ्चाप्रशमितशिताग्रं रणमुखे ।
स्वयं पश्चात्कृत्वा सुभटसमयं प्रत्ययवधात्
पितुः प्राणान्तस्य प्रतिफलमितो दास्यसि सखे ॥९७॥

लीढास्यः—एतत् करिष्ये । तदर्थञ्च मदीयं खड्गमनुलेपयामि ।

दुर्वैद्याच्चाहृतं मे निविडविषरसाभ्यञ्जनं किञ्चिदुग्र-
मीषन्मग्नेन यस्मिन् सकृदपि पुरुषः शङ्कुना भिन्नगात्रः ।
नक्तं ज्योत्स्नावसिक्तद्विगुणशमगुणद्योतमानौषधीभि-
र्दत्तालेपोऽपि सद्यो ध्रुवमरणमुखाच्छक्यते नैव रोद्धुम् ॥९८॥

एतावद्विषसञ्चारदिग्धया खड्गधारया।
ईषच्छिन्नश्चि गात्रञ्चेन् मृत्युस्तस्य न संशयः ॥९९॥

राजा—भूयोऽप्यत्र नौ चिन्तयितव्यम् । तथाहि ।

कालश्च कोऽत्र सुमते परिमार्गितव्यः
किं नौ तदर्थविषये दृढसाधनञ्च ।
भावो यदि प्रविदितो ननु कर्मदोषा-
दारम्भयोगविकलौ तु वरं भवावः ॥१००॥

आरम्भयोगोऽयमनन्यभावात्
स चेत्परीक्षासमयेऽवसीदेत् ।
तदर्थमन्योऽपि फलप्रसिद्धा-
वारम्भयोगोऽस्तु पुनर्द्वितीयः ॥१०१॥

शान्तम् । चिन्तयामि तावत् । युवयोरन्योऽन्यनैपुणे दृढं खलु विपणं करिष्यामः । हन्त । लब्धं मया ।

तद्द्वन्द्वे च यदा युवां क्षणमुभौ सन्तप्ततृष्णातुरौ
युष्मच्छक्तिपरीक्षणञ्च भवता साध्यं तथोग्रं तदा ।

संग्रामे स यदा विशुष्कवदनः पानीयमाकाङ्क्षति
तस्यार्थे विषपात्रमेकमपरं तस्मै हरिष्याम्यहम् ।।१०२।।

तथा स दैवेन विषार्द्रखड्ग-
दृढप्रहारादपि मुच्यमानः ।
पानीयमेतावदुपस्पृशन् नः
कार्य्यार्थसङ्कल्पितसिद्धये स्यात् ।।१०३।।

(ततः प्रविशति राज्ञी ।)

कथमिदानीं दयिते राज्ञि।

**राज्ञी**--विपद् विपदमनुबध्नाति यथैका द्रुतमन्यामनुवर्तते। लीढास्य। जलमग्ना ते भगिनी।

**लीढास्यः**--किं जलमग्नेति। अहो। क्व नु जलमग्ना।

**राज्ञी**-- कूले सखे क्षुद्रसरिद्वराया-
स्तिर्य्यग् विरूढस्तनुवृक्षकोऽस्ति।
पत्राणि यस्यामलपाण्डराणि
तदच्छतोये प्रतिबिम्बितानि ।।१०४।।

सा मालाभिरुपाययौ तरुवरं पुष्पैर्विधायेच्छया
कन्याममरुजाविशुद्धललनामृत्युप्रहाराभिधैः।
यान्याहुः पशुरक्षिणो हतधियः शब्दैरशिष्टाक्षरैः
क्षीणायुः करपल्लवानि सुभगा ब्रूयुः स्त्रियश्चाख्यया।। १०५।।

तत्र किल--

ऊर्द्धालम्बिप्रतनुविटपालम्बनार्थं गुणानां
पादन्यासात् समधिकरुचः साभ्यसूयेव तस्याः।
शाखा भग्ना पतति सहसा स्रोतसि स्म प्रणुन्ना
गाढोद्वेगोच्छ्वसितसलिले माल्यपुष्पैश्च बाला ।।१०६।।

ततोऽप्सु वासांसि निपत्य रंहसा
बभूवुरस्या विततानि सर्वतः।

बभौ च सा मत्स्यकुमारिकोपमा
मुहूर्त्तपारिप्लवदेहशोभया ॥१०७॥

तामात्मनोऽपि न दशां प्रतिबुध्यमाना
यावज्जगौ किल पुरातनगीतरागान् ।
स्वैरावगाहकुशला सलिलेचरा वा
नैसर्गिकोचिततदर्थगुणोपपन्ना ॥१०८॥

चिरन्तु सा तथा स्थातुं न शशाक ।

तावद् विसर्पिवसनानि तथागतायाः-
स्तोयाख्यमद्यबहुपानगुरूणि तस्याः ।
आकृष्य तां मधुरगानरतां वराकीं
निन्युर्जलाशयतले मृदुपङ्कनाशम् ॥१०६॥

**लीढास्यः**—अहो बत । किं जलमग्ना खलु सा ।

**राज्ञी**—जलमग्ना । जलमग्ना ।

**लीढास्यः**—हा उपाले । भूरीणि खलु वारीणि प्रतिपन्नासि । अतोऽहमात्मनोऽश्रूणि निवारयानि । तथापि तु—

स्वभावोऽयं पुंसां प्रकृतिनियतो यः प्रसरति
तथा भूयादेवं यदपि किल लोकोऽपवदतु ।
परं मोक्षाद् दुःखैर्नयनसलिलौघे प्रशमिते
ततः स्त्रीभावो मे कथमपि पुनः शाम्यति पुरा ॥११०॥

आमन्त्रये त्वां देव वयमन्यथा वक्ष्यामः पदानि ।
मन्युवर्षीणि यानि स्युरश्रुभिरनिर्वापितानि ॥१११॥

(निष्क्रान्तः ।)

**राजा**—गर्त्तहृदे । अनुसरावैनम् । पश्य ।

कियान् खलु मया यत्नस्तस्य रोषोपशमस्य कृते कृतः।
शङ्के पुनरेतेन हि भवेद् रोषोऽस्य प्रयोजितः ॥११२॥

तस्मादनुसरावैनम्।

(निष्क्रान्तौ।)

इति सप्तमं दृश्यम्।

इति चतुर्थोऽङ्कः।

# पञ्चमोऽङ्कः ।

## प्रथमं दृश्यम् ।

आलस्यनीडस्था श्मशानभूमिः ।

(ततः प्रविशतः खनित्रादिधारिणौ जानपदौ ।)

**प्रथमो जानपदः**—किं यदृच्छयात्मनो मोक्षमभिलषन्ती सा कृष्टीयसमाधि-स्थाने रक्षितव्या ।

**द्वितीयो जानपदः**—तथेत्यहं त्वां ब्रवीमि । तेन ह्यनुपदमेव तस्याः समाधिः कल्प्यताम् । अपमृत्युपरीक्षकेण ह्यस्या मृत्युपरीक्षया कृष्टीयसमाधियोग्येयमिति निर्णयाभ्युपगमः कृतः ।

**प्रथमो जानपदः**—आत्मरक्षार्थमेव सा चेदात्मानं नामज्जयत् तर्हि कथमेतत् ।

**द्वितीयो जानपदः**—ननु तथैव निर्णभ्योऽभ्युपगतः ।

**प्रथमो जानपदः**—अवश्यमेतेनात्मघातेन[1] भवितव्यम् । नान्यथा । यत एषोऽयमर्थः । यद्यहमात्मानं यदृच्छया निमज्जयामि तत् खलु कृतं सूचयति । कृतस्य च त्रयः प्रभेदा भवन्ति । तद् यथा । कृतं चेष्टितं व्यवसितञ्चेति । तदस्मात्[2] सा यदृच्छयात्मानममज्ज-यदिति ।

**द्वितीयो जानपदः**—मा खलु । साधो खनक । ननु श्रूयताम्—

**प्रथमो जानपदः**—मह्यमेव वचनावसरो दीयताम् । इह तावज्जलं वर्त्तते । तथा । इह तावत् पुरुषः स्थितः । तथा । अथ यदि पुरुष इहस्थं जलमुपेत्यात्मानं निमज्जयति तर्हि कामादकामादपि वा स नश्यति । लक्षय तावत् । यदि पुनर्जलमेव तमुपेत्य निमज्जयति स नात्मानं निमज्जयति । तदस्माद्[2] यो नात्मवधेनापराद्धो भवति स नात्मानं विनाशयति ।

**द्वितीयो जानपदः**—किं खल्वयमेव व्यवहारः ।

---

१. नात्मघातेनेति विवक्षितम् ।

२. तस्मादिति विवक्षितम् ।

**प्रथमो जानपदः**--अये । नन्वेष खलु व्यवहारः । एप खल्वपमृत्युपरीक्षकाणां परीक्षाव्यवहारः ।

**द्वितीयो जानपदः**—किमिह भूतार्थमुपलप्स्यते भवान् । यद्येपाऽर्याङ्गना न स्यात् तर्हि कृष्टीयसमाधिस्थानाद् बहिः समाधीयेत ।

**प्रथमो जानपदः**--नन्वत्र नाम त्वमात्थ । एतच्चातितरां शोचनीयं यदितरान् कृष्टीयबान्धवानपहाय महाजनानामेव लोके निमज्जनेनोद्बन्धनेन वात्महननमभ्युपेतम् । एहि तावन्मे खनित्र । न खलूद्यानपालान् परिखाकारान् समाधिखनकांश्च वर्ज्जयित्वा केचन पुराणा आर्य्यपुरुषाः सन्ति । त एवादमस्य[1] वृत्तिं धारयन्ति ।

**द्वितीयो जानपदः**--किं स आर्य्यपुरुष आसीत् ।

**प्रथमो जानपदः**--स एव पुरुषेषु प्रथममस्त्रमधारयत् ।

**द्वितीयो जानपदः**--ननु तस्य न किमप्यस्त्रमासीत् ।

**प्रथमो जानपदः**--कथम् । किं देवपूजकोऽसि । कथं नाम निगममवबुध्यसे । निगमश्चाह । आदमोऽखनदिति । किमस्त्रं विनैव स खनितुमशकत् । अपरं त्वां पृच्छामि । यदि त्वं यथार्थं न प्रतिवक्ष्यसि तत्प्रतिपद्यस्व--

**द्वितीयो जानपदः**--अपेहि ।

**प्रथमो जानपदः**--कोऽसौ यः सुधालेपकान्नौकारात् सूत्रधारादपि वा दृढतरं निर्मांति ।

**द्वितीयो जानपदः**--वध्यदण्डनिर्माता । स हि दण्डस्तदधिवासिनां सहस्रमतिजीवति ।

**प्रथमो जानपदः**—सत्यं खलु नर्मोक्तिस्ते मह्यं रोचते । वध्यदण्डस्तु सुष्ठु प्रयुक्तो भवति । कथं खलु सुष्ठु प्रयुक्तो भवति । ये नाम न सुष्ठु प्रवृत्तास्तेष्वेवायं सुष्ठु प्रयुक्तो भवति । अथ वध्यदण्डो धर्मस्थानादपि दृढतरं निर्मित इति ब्रुवंस्त्वं न सुष्ठु प्रवृत्तः । तदस्माद् वध्यदण्डः खलु त्वयि सुष्ठु प्रयुक्तो भवेत् । एहि । इहैव पुनर्यत्तो भव ।

**द्वितीयो जानपदः**--किं को नाम सुधालेपकान्नौकारात् सूत्रधारादपि वा दृढतरं निर्मांतीति ।

**प्रथमो जानपदः**—अये । तदेव मे ब्रूहि । ततश्च स्वाधिकाराद् विरम ।

**द्वितीयो जानपदः**--अये । अथाहं वक्तुं पारयामि ।

**प्रथमो जानपदः**—इहैव यत्तो भव ।

---

१. तदाख्य आदिपुरुषः ।

**द्वितीयो जानपदः**——स्तोमेन[1] न खलु वक्तुं पारयामि ।

(ततः प्रविशति दूरेण हेमलेखो होरास्यश्च ।)

**प्रथमो जानपदः**——नेहात्मनो बुद्धिमतिमात्रं प्रमाथय । यतस्त्वादृशो मृत्पिण्ड-बुद्धिस्ताडनेनापि न संशोधनीयो भवति । इतः प्रभृति यदा त्वमेवं पृष्टोऽसि तदा समाधिखनक इति ब्रूहि । तन्निर्मितानि स्थानानि यस्मादाप्रलयं तिष्ठन्ति । याहि । यावद् यौवन[2]मुपगम्य सुरापात्रं ममोपहर ।

(निष्क्रान्तो द्वितीयो जानपदः ।)

(स तु खनति गायति च ।)

**प्रथमवयसि यावद् रागबन्धो ममासीद्**
**मधुर इव स मन्ये रागबन्धो ममासीत् ।**
**परिणयशपथो भो कालगत्या हिताय**
**न हि बत मम मन्ये तत्र कार्य्यो बभूव ॥१॥**

**हेमलेखः**——किमस्य स्वाधिकारबोधो नास्ति यथायं समाधिखननकालेऽपि गायति ।

**होरास्यः**——आचार एवास्मिन्नेतस्य सुकरतामापादयति ।

**हेमलेखः**——एवमेतत् । अनायासतरे कर्मणि नियुक्तः पुरुषो हि मृदुतरमना भवति ।

**प्रथमो जानपदः**——(गायति) ।

**परिणतवयसैवं मन्दमन्दक्रमेण**
**स्वकरयुगलबन्धे हन्त तावद् धृतोऽस्मि ।**
**स्वपदविचलितश्च प्रापितो भूमिभेद-**
**मधिकमतदवस्थो गूढमापादितोऽस्मि ॥२॥**

(कपालं क्षिपति ।)

---

१. शय इति शेषः ।
२. तदाख्यं पुरुषम् ।

**हेमलेखः**--तस्मिन् कपाले किलैका रसनासीत् । सोऽप्येकदा गीताय समर्थोऽभवत् । कथं खल्वसौ दुर्वृत्त एनं भूमितलेऽभ्याहन्ति । यथैष प्रथमवधसाधनं काणस्य[1] हन्वस्थि भवेदिति । एष कस्यचिन्नयवेदिनो मुण्डं वा भवेद् यदसौ बालेय इदानीमतिक्रामति । यद्धि कदाचिदीश्वरमप्यतिलङ्घयेत् । किं न तथा भवेत् ।

**होरास्यः**--देव । तथा भवेत् ।

**हेमलेखः**--अथवा कस्यचित् पारिषदस्य भवेद् यत्[2] खलु ब्रूयात् प्रिय देव सुप्रभातं भद्र देव कच्चित् कुशलं भवत इति । एष पुनरमुकस्वामी वा भवेद् यो देवस्यामुकाश्वमन्तर्गतप्रार्थनः प्रशंसति स्म । किं न तथा भवेत् ।

**होरास्यः**--देव । अथ किम् ।

**हेमलेखः**--कथम् । एवमेव भवेत् । इदानीन्तु नः कृमिदेव्याः । एष इदानीं निर्हनुः समाधिखनकस्य खनित्रेणाभ्याहतशीर्षो भवति । एष इदानीमद्भुतो विपरिवर्तो यदि तावदवबोधाय नो बुद्धियोगोऽस्ति । किमेतेषामस्थीनामुत्पादनं तथा क्लेशकरं नासीद् यथैतानि दारुगुलिकाक्रीडायामुपयुज्येरन् । मदीयं शीर्षं खल्वेतच्चिन्तायामप्यातुरं भवति ।

**प्रथमो जानपदः**--(गायति)

> **भुवनतलविदारि[3] स्यात् खनित्रं खनित्र-**
> **मथ निभृतशवस्याच्छादनं यच्च वासः ।**
> **अयि च विवरमेतत् कर्दमस्याद्य घोर-**
> **मतिथिवरसपर्य्यासाधनायोपपन्नम् ।।३।।**

(अपरं कपालं क्षिपति ।)

**हेमलेखः**--एष पुनरपरः । कथं नैष व्यवहारजीविनः कपालो भवेत् । क्व नु तस्येदानीं सत्याभासा वाक्छलानि विपयार्था अधिकाराः कैतवानि च स्युः । कथं न्वेष एनं धृष्टदुर्वृत्तं पङ्किलकुद्दालेनात्मनः शीर्षं ताडयन्तमपि सहते स्वाभियोगक्रियावार्त्ताञ्चास्मै न ब्रूयात् । आः । एष

---

१. तदाख्यस्य भ्रातृवधसाधनं खरस्य हन्वस्थीति कृष्टीयधर्मकथानुसन्धेया ।
२. मुण्डमिति शेषः ।
३. इत्येकं खनित्रं द्वितीयम् ।

माणवकः किल स्वकाले राजव्यवस्थाभिः प्रतिज्ञापत्रैः पणैः साक्षियुगलैः सञ्चारविधिभिश्च महान् क्षेत्रक्रयी स्यात् । किमेष एवास्य पणवृत्तेः सत्त्वशेषः सञ्चारविधेश्च प्रत्युपलम्भो यदस्य श्लक्ष्णशीर्षं पङ्कशेषेन पूरितमिति । किमस्य प्रमाणपत्राणि साक्षियुगलान्यप्युत प्रतिज्ञापत्रद्वयस्यायतिं विना क्रीतद्रव्याणि न पुनः प्रमाणीकरिष्यन्ति । अस्य क्षेत्राणां समर्पणपत्राण्यप्यस्मिन्नाधारे न प्रभविष्यन्ति । हा । किमनेन दायादेनाप्यतोऽधिकं न प्रतिपत्तव्यम् ।

**होरास्यः**—देव । नाण्वप्यतोऽधिकम् ।

**हमलेखः**—किं न चर्मपत्रं मेषचर्मभिः कृतम् ।

**होरास्यः**—देव । अथ किम् । गोवत्सचर्मभिरप्युत ।

**हेमलेखः**—ते खलु मेषा गोवत्साश्च भवन्ति ये तस्मिन् प्रत्ययमादधति । यावदेनं पृच्छामि । अयि भोः । कस्यायं समाधिः ।

**प्रथमो जानपदः**—आर्य्य । मम । (गायति)

**अयि च विवरमेतत् कर्दमस्याद्य घोर-**
**मतिथिवरसपर्य्यासाधनायोपपन्नम् ॥**

**हेमलेखः**—एष खलु तवैव नूनं स्याद् यत् त्वमत्र वितथं वदसि ।

**प्रथमो जानपदः**—आर्य्य । भवान् खल्वेतस्माद् बहिरेव शेते । तस्मान्नैष त्वदीयो भवति । अथाहमेतस्मिन् न शये । तथाप्येष मदीयो भवति ।

**हेमलेखः**—त्वमेतस्मिन्नथैष त्वदीयो भवतीति त्वमत्र वितथं वदसि । मृतानामर्थे खल्वेष न सजीवानाम् । तस्मात् त्वं वितथं वदसि ।

**प्रथमो जानपदः**—आर्य्य । वलत्वद् वितथमेतत् । एतत्तु मत्तः पुनर्भवन्तं संक्रमिष्यति ।

**हेमलेखः**—कस्य नु पुरुषस्य कृते त्वमिमं खनसि ।

**प्रथमो जानपदः**— आर्य्य । न कस्यापि पुरुषस्य कृते ।

**हेमलेखः**—कस्यास्तर्हि स्त्रियः ।

**प्रथमो जानपदः**—न कस्यापि कृते । न तयोरेकस्यापि ।

**हेमलेखः**—कः पुनरेतस्मिन् समाहितो भविष्यति ।

**प्रथमो जानपदः**—आर्य्य । या किल स्त्र्यासीत् । शान्तिस्तावद् भूयादस्यै । मृता हि सा ।

**हेमलेखः**—कथं यथार्थवादी खल्वेष दुर्वृत्तः । सुव्यक्तपत्रगणनयेव नन्वस्माभिः कथयितव्यम् । अथवा वक्रोक्तिरस्मान् नाशयिष्यति । होरास्य । ईश्वरनाम्नाहं शप एतानि त्रीणि संवत्सराणि मया लक्षितं कालोऽयं तथा विलक्षणः संवृत्तो यथा ग्राम्यस्य पादाङ्गुलिः पारिषदपार्ष्णि-भागस्य तावदन्तिकमायातो यावता सोऽस्य पादस्फोटमुद्वेजयतीति । कियच्चिरं नु समाधिखनकोऽसि ।

**प्रथमो जानपदः**—संवत्सरस्य सर्वेषां दिवसानां तस्मिन्नेव दिवसेऽत्राहं नियुक्तो यस्मिन् नः पूर्वराजो हेमलेखः स्फूर्तवीर्यं[1] विजिग्ये ।

**हेमलेखः**—कियच्चिरं नु ततः प्रभृति व्यतीतम् ।

**प्रथमो जानपदः**—किं त्वं वक्तुं न पारयसि । सर्वो हि मूढस्तद् वक्तुं पारयति । तस्मिन्नेव दिवसे कुमारो हेमलेखो जातः । य इदानीमुन्मत्त उल्लण्डञ्च प्रस्थापितः ।

**हेमलेखः**—अये । ननु कथं स उल्लण्डं प्रस्थापितः ।

**प्रथमो जानपदः**—कथम् । यस्मात् स उन्मत्त आसीत् । स हि तत्र प्रत्यागतचेतनो भविष्यति । अथवा न चेत् तन्न तत्र बहु मन्तव्यम् ।

**हेमलेखः**—कथम् ।

**प्रथमो जानपदः**—न तत्र तस्योन्मादो लक्षयिष्यते । तत्र हि लोकः स इवोन्मत्तो भवति ।

**हेमलेखः**—कथं नु स उन्मत्त आसीत् ।

**प्रथमो जानपदः**—विचित्रगत्येति कथयन्ति ।

**हेमलेखः**—कथं विचित्रगत्या ।

**प्रथमो जानपदः**—शपे खलु तस्य सबुद्धिभ्रंशमपि ।

**हेमलेखः**—कुतः ।

**प्रथमो जानपदः**—कथम् । इहैव दीनार्कविषये । माणवको वा पुरुषो वाहमत्र त्रिंशद्वर्षाणि श्मशानाध्यक्षः ।

**हेमलेखः**—कियच्चिरं नु पुरुषो भूमौ शयीत यावदसौ विशीर्य्येत् ।

**प्रथमो जानपदः**—शपे खलु स चेन्मरणात् पूर्वमेव न विशीर्णः स्याद् यथेदानीं बहूनि मृतशरीराणि प्रायेण खल्वशक्यसमाधिक्रियाणि दृश्यन्ते तर्ह्यसौ तेऽष्टौ नव वा संवत्सराणि स्थास्यतीति । चर्मकारस्तु ते नव संवत्स-राणि स्थास्यति ।

---

१. तदाख्यं समाननाम्नो वर्तमानवीरस्य पितरम् ।

**हेमलेखः**—कथं सोऽन्येभ्योऽधिकं स्थास्यति ।

**प्रथमो जानपदः**—कथमार्य्य । तस्य हि चर्म तथैवात्मवृत्त्या चर्मवद् दृढीकृतं यथा तद्रसञ्चिरेण निवारयेत् । तव खलु रसस्तव शवस्य गुरुक्षयकारकः स्यात् । एष इदानीमपरः कपालः । एष कपालः खलु त्रयोविंशतिं संवत्सराणि भूमौ शेते ।

**हेमलेखः**—कस्यैष कपाल आसीत् ।

**प्रथमो जानपदः**—कस्यचिदुन्मत्तस्य । कस्य नु त्वं तर्कयसि ।

**हेमलेखः**—न हि । नाहं जाने ।

**प्रथमो जानपदः**—उदग्रवृत्ततया सोऽभिशप्तोऽस्तु । स ह्येकदा मम शीर्षोपरि पुटग्रीवपरिमितं रण्यंदेशीय[1]मद्यमभ्यसिञ्चत् । आर्य्य । एष एव कपालो योधिकस्य[2] राज्ञो विदूषकस्य कपाल आसीत् ।

**हेमलेखः**—किमेष एव ।

**प्रथमो जानपदः**—स एव ।

**हेमलेखः**—पश्यामि तावत् । (कपालमादत्ते ।) अहोबत योधिक । होरास्य । स खलु मया विदितः । यो निःशेषपरिहासानां परार्घ्यबुद्धिविलासानाञ्च प्रभवोऽभवत् । सहस्रकृत्वश्च तेनाहं पृष्ठवाहितः । अथ कथमिदानीमेष चिन्तयतो मे बीभत्सः संवृत्तः । कण्ठश्च तावन्मे वमनोन्मुखो भवति । इहैव किलौष्ठद्वयसन्निवेश आसीद् यन्न जाने कति वारानहञ्चुम्बितवानिति । क्व नु खलु तवेदानीमवहसितानि स्युस्तव लीलाकौतुकानि तव गीतानि तव प्रमोदविलसितानि च यैः समग्रा भोजनसभाट्टहास्यवश्यतामयासीत् । न पुनरेकोऽपि तवेदानीं हसितानामुपहासको वर्तते । दृढं खलु हताशोऽसि । अथ मे कामिनीकक्षं याहि । ब्रूहि चैनाम् । गाढं त्वमात्मनि विलेपनमर्पय । एष मुखप्रसादस्तु त्वयाधिगन्तव्य इति । तेन चात्मानमुपहसतु । प्रसीद । होरास्य । ब्रूहि मे तावदेतत् ।

**होरास्यः**—देव । किमेतत् ।

**हेमलेखः**—किं मन्यसे तत्रभवानलक्ष्यजङ्घालो[3]ऽपि भूमावेवमलक्ष्यत ।

---

१. तदाख्यदेशीयम् ।

२. तदाख्यस्य विदूषकस्य ।

३. तदाख्यो वीरः ।

**होरास्यः**—एवमेव ।

**हेमलेखः**—किञ्च । एवमाघ्रायत भोः ।

(कपालं निदधाति ।)

**होरास्यः**—देव । एवमेव ।

**हेमलेखः**—होरास्य । कीदृशाः खलु नीचोपयोगा यत्र वयं निवर्तामहे । कथं नु बुद्ध्यापि तत्रभवतोऽलक्ष्यजङ्घालस्य पुण्यरजसां लेशमात्रमपि द्रष्टुं न शक्यते यावत् तेन पिहितपात्ररन्ध्राणि तान्युपलभ्यन्ते ।

**होरास्यः**—एवंविचारो ह्यतिसूक्ष्मविचारः स्यात् ।

**हेमलेखः**—न हि । शपे खलु नैवमण्वपि । तच्चैवं नियमनिश्चयेन सम्भावनोत्तरञ्च तत्रानुसरामः । तद् यथा । अलक्ष्यजङ्घालोऽम्रियत । अलक्ष्यजङ्घालः समाधीयत । अलक्ष्यजङ्घालो रजसा परिणतः । रज एव हि पृथिवी । पृथिव्या वयं स्निग्धपङ्कं रचयामः । कथं नु ते तत्परिणामरूपेण स्निग्धपङ्केन यवमद्यभाण्डं न पिदध्युः ।

**सीसारः[1] सुमहाबलो व्युपरतः पङ्कस्य रूपं दधद्**
**रन्ध्रञ्चेदपिधातुमर्हति पुरो वायोर्निरोधाय सः ।**
**तस्यैतानि रजांसि येन वसुधा वेगात्पुरा कम्पिता**
**वप्रं कुर्य्युरनेकशो हिममरुत्स्रोतोमहाबाधकम् ।।४।।**

शान्तं तावत् । शान्तं तावत् । एहि । एकान्ते तिष्ठावः । इत एवाभिवर्तते राजा ।

(ततः प्रविशन्ति श्रेणीबद्धाः पुरोहितादय उपालाशववाहिनो लीढास्योऽनुपदञ्च परिदेवका राजा राज्ञी च सह परिजनादिना ।)

अथ राज्ञी पारिषदाश्च । को नु खल्वेष यमेतेऽनुवर्त्तन्ते । तच्च पुनरीदृशैर्विकल्पैः कल्पैः । एतेन खलु सूचितम्—

**एभिरनुवर्त्त्यमानो हताशोऽहनत् स नूनमात्मानम् ।**
**साहसिकस्य कर्मणा बभूव चापि कुलसम्भूतः ।।५।।**

एहि । क्षणं तावदात्मानं गूढं निवेश्य लक्षयावः ।

(होरास्येन सहापक्रामति ।)

१. तदाख्यो वीरः ।

**लीढास्यः**—कः पुनरन्यो विधिरनुष्ठेयः ।

**हेमलेखः**—एष खलु लीढास्योऽतीव सत्त्ववान् कुमारः । लक्षय तावत् ।

**लीढास्यः**—कः पुनरन्यो विधिरनुष्ठेयः ।

**प्रथमः पुरोहितः**—तस्या ह्यन्त्यक्रिया यावदधिकारमस्माभिः प्रथिताः । आशङ्कनीयं खल्वस्या मरणमासीत् । तथाहि ।

**न चेन्महाराजनिदेशवाक्यं**
**वर्त्तेत नो धर्मविधिं विलङ्घ्य ।**
**अपुण्यभूमौ तदियं शयीत**
**यावन्मृतेभ्योऽन्तिमतूर्य्यनादः[१] ॥६॥**

सदयप्रार्थनानां स्थाने चैषा मृत्पात्रखण्डैररणिभिरुपलैश्चाभिषेचनीया ।

**तथापि कौमारदशोचितैरियं**
**विकीर्य्य माल्यैः कुसुमैश्च संवृता ।**
**सघण्टिकान्त्येष्टिपदार्थसञ्चयै-**
**स्तदीयमन्त्याश्रयमाहितापि सा ॥७॥**

**लीढास्यः**—किमतोऽधिकं नानुष्ठेयम् ।

**प्रथमः पुरोहितः**—अतोऽधिकं नानुष्ठेयम् । कुतः ।

**प्रेताचारं तद्वयं दूषयेम**
**शान्तिस्तोत्रं तत्कृते चेत् पठेम ।**
**शान्त्युत्क्रान्तप्राणवायोरिवास्याः**
**शान्तिं भूयः कर्मणा साधयेम ॥८॥**

**लीढास्यः—पृथिव्यामेव रक्षैनां विशुद्धललितात्मनः ।**
**देहाद्भवन्तु पुष्पाणि सुनीललोहितानि च ॥९॥**

किञ्च ।

**ब्रवीमि ते दुराचार दिव्यदूती मे भगिनी भवित्री ।**
**यावत् त्वन्तु रौरवे सदीर्घरावं संदह्यासे ॥१०॥**

---

१. समाधिस्थाः सर्वे तूर्यनादैरन्तिमविचारार्थमाहूयन्त इति क्रुष्टीय-धर्मकथानुसन्धेया ।

हेमलेखः--कथम् । श्रीमत्युपालैषा ।

राज्ञी--ललितायै ललितानि सन्तु । आमन्त्रये त्वाम् । (पुष्पाणि विकीर्य्य) अयि ललिते ।

आसीत्पुरायं किल मे मनोरथः
श्रीहेमलेखस्य वधूर्भवेरिति ।
आकीर्य्य पुष्पैश्च विभूषयाणि ते
तल्पन्तु वध्वा न समाधिमायतम् ।।११।।

लीढास्यः--भो शोक त्रिगुणोऽपि मे दशगुणं तं दुष्कृतं निर्दह
यत्पापेन विशुद्धिमत्यपि पुरा धीस्ते[1] चिरं विप्लुता ।
यावत् पूरणकर्मणः क्षितिमिमां कृत्स्नां क्षणं धारय
येनाहं निजबाहुपाशविधृतां कुर्य्यां पुनः संस्थिताम् ।।१२।।

(समाधिमध्ये प्लुतेनावतरति ।)

अथेदानीम्—

मृततनुभृतोः साम्येन त्वं रजांसि समाक्षिप
समतलमिदं स्थानं यावत् करोषि शिलोच्चयम् ।
गिरिवरमसौ विन्ध्यं यस्ते पुराणमतिक्रमे-
दसितशिरसं व्योमाश्लिष्टं तथा तुहिनालयम् ।।१३।।

हेमलेखः—(उपसृत्य)

कोऽयं यस्योच्छ्वसितवचनाख्येयतां याति शोक-
स्तद्भावस्य स्फुटमतितरां वाचकैरक्षरैर्यः ।
ऋक्षान् सर्वान् गगनचरितान् मोहयित्वा प्रकामं
श्रोतुं यत्तान् किमिव कुरुते विस्मयावेशरुद्धान् ।।१४।।

अयमहं दीनदेश्यो हेमलेखोऽस्मि ।

(समाधिमध्ये प्लुतेनावतरति ।)

---

१. एतदुपालामुद्दिश्येति बोध्यम् ।

**लीढास्यः**—पिशाचस्तवात्मानं ग्रसतु ।

(तेन नियुध्यते ।)

**हेमलेखः**—न त्वं साधु प्रार्थयसे । प्रसीद । मम कण्ठादङ्गुलीस्तेऽपसारय । यतः ।

यदपि किल न रोषणोऽस्मि तावत्
क्वचिदपि साहसिको न चास्मि धैर्य्यात् ।
स्फुरति मयि तथापि घोरसत्त्वं
किमपि यतो भवता विशङ्कनीयम् ॥१५॥

हस्तं तेऽपसारय ।

**राजा**—इमावन्योऽन्यतो विश्लेषय ।
**राज्ञी**—हेमलेख । हेमलेख ।
**सर्वे**—भद्रमुखौ ।
**होरास्यः**—भद्र देव । शान्तं तावत् ।

(परिजनेन विश्लेषितौ तौ समाधेरपक्रामतः ।)

**हेमलेखः**—कथम् । एतदधिकृत्याहमनेन योत्स्ये यावन्मे नयनच्छदोच्-लिष्यतः ।
**राज्ञी**—भो पुत्रक । किमधिकृत्य ।

**हेमलेखः**—भावानुबन्धि हृदयं मम तावदस्यां
किं वा करिष्यसि हताश सहोदर त्वम् ।
यद् भ्रातरः किल समेत्य सहस्रशोऽपि
भावं न पूरयितुमेनमियत्तयालम् ॥१६॥

**राजा**—अहो लीढास्य । उन्मत्त एवायम् ।
**राज्ञी**—ईश्वरप्रसादाय खलु सहस्वैनम् ।
**हेमलेखः**—ईश्वरशोणितेनाहं पृच्छामि ननु दर्शय मे किं नु त्वं करिष्यसि । किं रोदिष्यसि । किं योत्स्यसे । किमुपवत्स्यसि । किमात्मानं

दारयिष्यसि । किमम्लरसमापास्यसि । किं कुम्भीरं खादिष्यसि। अहमपि तथा करिष्ये । अपि कूजयितुं त्वमिहागतोऽसि । किञ्च ।

अवतीर्य्य समाधिगह्वरेऽस्मि-
न्नपि मां ह्लेपयितुं त्वमागतोऽसि ।
असुमाननया समाहितः सं-
स्त्वमिवाहं सकलं तथा करिष्ये ॥१७॥

किञ्च ।

एतां शिलोच्चयकथां यदि जल्पसि त्व-
मेते क्षिपन्तु मयि निर्भरभूमिभारम् ।
यावच्छिरोऽस्य रविणा परिदह्यमानं
शैलं महेन्द्रमपि नेष्यति पिण्डकत्वम् ॥१८॥

मैवम् । यदि त्वं पुष्पितया वाचा प्रलपिष्यसि नन्वहमपि त्वद्वत् पुष्पितया वाचा साधु प्रलपिष्यामि ।

राज्ञी—पर्य्याप्तोऽयमुन्मादः । किञ्च ।

क्षणमभिभवेदुन्मादोऽयं तमेनमसौ यथा
तदनु सहसा मौनं लब्धा विषादविमन्थरम् ।
निभृतमचिरादास्ते धृत्या कपोतवधूजनः
प्रभवपुटकादुत्पाद्यैवं विरक्तशिशुद्वयम् ॥१९॥

हेमलेखः—किं शृणोत्यार्य्यः ।

को हेतुर्यदितो मयि प्रियसुहृद्येवं भवान् वर्त्तते
भावो मे त्वयि निर्भरश्चिरमभूत् किं तेन वा साम्प्रतम् ।
स्वं साध्यं प्रसमीक्ष्य साधु चरतु श्रेयोऽपि भीमः स्वयं
मार्ज्जारो नदतु स्फुटं ननु शुनः कालो भवेदागतः ॥२०॥

(निष्क्रान्तः ।)

**राजा**—प्रसीद । भद्र होरास्य । उपचरैनम् ।

(निष्क्रान्तो होरास्यः।)

(लीढास्यं प्रति)

ह्यो रजन्यामस्मत्संवादबलेन धैर्यं तावद् दृढीकुरु । अविलम्बितमेव वयमिममर्थं समुद्योगमुखेन साधयामः । भद्रे गर्त्तरुदे । पुत्रं तावदभिरक्ष । एष समाधिः खलु जीवच्चैत्यस्तूपेन शोभनीयः ।

**इतो नो भविता शीघ्रं समयः शान्तिमन्थरः ।**
**तावद् धैर्य्यं समालम्ब्य वर्त्तितव्यं यथाविधि ।।२१।।**

(निष्क्रान्ताः सर्वे ।)

**इति प्रथमं दृश्यम् ।**

## द्वितीयं दृश्यम् ।

दुर्गे बहिर्द्वारशाला ।

(ततः प्रविशति हेमलेखो होरास्यश्च ।)

**हेमलेखः**—आर्य्य । एतावदिदमधिकृत्य । अपरमिदानीं द्रक्ष्यसि । अपि सकलवृत्तान्तं स्मरसि ।

**होरास्यः**—देव । किं स्मरामीति ।

**हेमलेखः**—आर्य्य ।

द्वन्द्वं मे मनसि बभूव घोररूपं
येनाहञ्चिरमभवं तदा विनिद्रः ।
यन्मन्ये नृपतिविरोधिनां रणेषु
रुद्धानामपि बलवत् स्थितोऽस्मि रुद्धः ॥२२॥

सहसा च—साहसं खलु तथा प्रशंसनीयम् । एवं ह्यस्माभिर्बोद्धव्यम्—

प्रायोऽविवेकविधिनापि कृतं प्रसिध्येद्
नश्यन्ति चिन्तितफलानि यदा कृतानि ।
दैवं हि निर्दिशति नः खलु भागधेय-
मस्माभिरेवमतथापरिकल्प्यमानम् ॥२३॥

**होरास्यः**—इदं खलु ध्रुवं नाम ।

**हेमलेखः**—नौकक्षाच्च बहिर्विसर्पिवसनो गाढान्धकारे तदा
निर्गत्य स्म निरूपयामि नृपतेराज्ञाहरौ बान्धवौ ।

लब्ध्वा तौ च तयोरपाहरमहं तल्लेखपत्रं क्षणाद्
नौकक्षञ्च ततो ब्रवीमि खलु ते भूयोऽपि तं प्राप्तवान् ।।२४।।

ततो भयाद् विस्मृतसाधुवृत्तः
किमप्यहं साहसिकोऽस्मि जातः ।
तयोर्महाराजनिदेशपत्रं
सद्यः समुन्मुद्रयितुं प्रवृत्तः ।।२५।।

होरास्य। अहो राजपैशुन्यम् । तत्र चाहं प्रेक्षे व्यक्तादेशम्––

नानाहेतुप्रभूतं तदुभयनृपतिश्रेयसे युज्यमानं
वेतालो भीषणोऽसाविति किल विहतं जीवितं मे दिशन्तम् ।
कालक्षेपं विहाय स्खलितविरहितं पाठमात्रेण चास्य
च्छेद्यं शीर्षं मदीयं कथमपि परशूल्लेखकार्य्यं विनेति ।।२६।।

**होरास्यः**––किं सम्भाव्यत एतत् ।

**हेमलेखः**––एतत् तदादेशपत्रम् । आत्मावसरे त्वमेतद् भूयो वाचयितुमर्हसि । अथ किं श्रोष्यसि मे कथं मयानुप्रवृत्तमिति ।

**होरास्यः**––प्रसीद ।

**हेमलेखः**––दौरात्म्येन तथा दृढं परिवृतः सर्वस्वरूपेण य-
दासीनोऽरचयं निदेशमपरं हस्ताक्षरैश्चारुभिः ।
यावद् बुद्धिमुपेत्य नैव रचिता प्रस्तावनापि स्वयं
नाट्यं तावदिदं कुतोऽपि सहसा प्रारब्धमेवानया ।।२७।।

चारुहस्ताक्षरं ह्यवरत्वपिशुनमिति नयवेदिनामिव नो ममापि पुरा मतमासीत् । तादृशशिक्षाविस्मरणार्थञ्च भूयान् श्रमो मया विहितः । आर्य्य । तदानीन्तु तया शिक्षया मे महदुपकृतम् । किं ज्ञास्यसि कोऽस्य सारो यन्मया लिखितमिति ।

होरास्यः—भद्र देव । बाढम् ।

हेमलेखः—राज्ञोद्दिष्टं व्यग्रादेशविज्ञापनम् । तथाहि ।

विश्वस्तः करदो यथैव सुतरामुल्लण्डराजो भवान्
सौहार्द्दं खलु नौ विवृद्धिमयतां यत्तालवृक्षोपमम् ।
शान्तिर्धारयतु स्रजं यदनघां गोधूमपुष्पाङ्कितां
योगश्रीरिव यच्च तिष्ठतु चिरं मित्रत्वयोरन्तरे ॥२८॥

एवञ्च बहूनि समादेशगुरूणि यथात्वानि तत्रासन् ।

तथा पत्रं दृष्ट्वा सपदि विहितार्थानुसरणात्
परं कालक्षेपं क्षणमपि च वेगात् परिहरन् ।
ददन्नैवं धर्मावसरमनयोरन्तसमये
हर त्वं मद्वार्त्ताहरपुरुषयोर्जीवितमिति ॥२९॥

होरास्यः—कथं खल्वेतन्मुद्रयाङ्कितम् ।

हेमलेखः—कथम् । तत्रापि दैवं प्रयोजकमासीत् ।

मत्कोषे हि तदा बभूव सुभगं मुद्राङ्गुलीयं गुरो-
र्दीनार्काधिपतेर्निदेशकरणे मुद्रासरूपञ्च यत् ।
मूलस्याकृतिदर्शनाच्च पुटितं तल्लेखपत्रं मया
न्यस्तस्वाक्षरमस्य मुद्रितमथ न्यस्तञ्च तत्पूर्ववत् ॥३०॥

तल्लेखविपर्य्ययश्च न जातु प्राज्ञायत ।

अथ परेद्युरभूच्च भयङ्करो
जलनिधौ खलु नो दृढसंयुगः ।
तदनु यच्च सखे समवर्त्तत
तदखिलं विदितोऽसि कथामुखम् ॥३१॥

होरास्यः—एवं गूढास्तीर्णरुजाक्रान्तौ स्वर्गतिं गतौ ।

**हेमलेखः**—कथं माणवक । तौ नामास्मिन् नियोगे प्रीत्या नियुक्तौ । अतस्तौ मम घृणां न स्पृशतः । तयोर्विनाशो हि निजधृष्टतयापादितः ।

यतः ।

शङ्कापदं तन्ननु तीक्ष्णवीर्य्ययोः
क्षुद्रः स्थितश्चेद् युधि बद्धवैरयोः ।
मध्ये प्रहारोद्यतदीप्तभागयोः
शस्त्राग्रयोः प्राणविनाशमूलयोः ॥३२॥

**होरास्यः**—कथम् । कीदृशः खल्वयं राजा ।

**हेमलेखः**—भूपो हतः कलुषिता जननी च येन
सिंहासनस्य मम चार्द्धपथे स्थितो यः ।
मज्जीवितञ्च बत हर्त्तुमनाश्छलेन
यो मत्स्यबन्ध इव निक्षिपति स्म बन्धम् ॥३३॥

किं मन्यसे न खलु सोऽद्य मया विधेयो
धर्म्यश्च तस्य निजबाहुबलेन मोक्षः ।
पापञ्च किं न यदि सर्गविरोधिसत्त्वो
भूयोऽपि पापचरणान्न निवार्य्यतेऽसौ ॥३४॥

**होरास्यः**—नन्वविलम्बितमेव तेनोल्लण्डराजाद् विज्ञायेत कस्तत्र वृत्तान्तशेष इति ।

**हेमलेखः**—अविलम्बितमेवैतद् भवेत् कालान्तरं मम ।
यावान् पुरुषसंख्याने कालस्तावान् क्षये मतः ॥३५॥

भद्र होरास्य । भृशं खलु परितप्ये यद् लीढास्य उपस्थित आत्मानं विस्मृतवानहम् । कुतः ।

कार्येण मे पुनरवैमि तदीयकार्य्यं
भावञ्च निर्भरमतः स मया प्रसाद्यः ।

नूनं तथा विलसदस्य तु शोकवीर्यं-
मारोपयज्जनमिमं दृढमन्युशीर्षम् ॥३६॥

**होरास्यः**—शान्तं तावत्। कोऽयमित एवागच्छति ।

(ततः प्रविशत्यश्रुकः।)

**अश्रुकः**—सुस्वागतमत्रभवते देवाय दीनार्कप्रत्यागताय ।

**हेमलेखः**—आर्य्य । प्रह्वस्य मे भवते धन्यवादाः।(होरास्यं प्रति जनान्तिकम्) अपि वेत्स्येनं जलदंशकम् ।

**होरास्यः**—(हेमलेखं प्रति जनान्तिकम्) भद्र देव । न हि ।

**हेमलेखः**—(होरास्यं प्रति जनान्तिकम्) तवैव समवस्थाधिकप्रसन्ना। यतः पापं खल्वमुं जानतो भवति। तस्य हि भूरि क्षेत्रं विद्यते । बहुफलञ्च। ननु पशुरेव पशूनां प्रभुर्भवतु। तत्प्रधानश्च राज्ञो भोजनपङ्क्तौ स्थास्यति। वायसविशेषो ह्येषः । किन्तु यथाहं ब्रवीमि केवलं पङ्क्त्याधिकारितया विशालः।

**अश्रुकः**—दयित देव । अवसरोऽयं देवस्य चेन् महाराजेनोद्दिष्टं किञ्चन मयात्रभवते निवेदयितव्यम्।

**हेमलेखः**—आर्य्य । तस्यादानाय सर्वात्मसज्जीभावे स्थितोऽस्मि। ननु शिरस्त्रं ते यथोपयोगं प्रापय। शिरोऽर्थञ्चैतत् ।

**अश्रुकः**—अनुगृहीतोऽस्मि देवेन। भृशतप्तस्त्वयं दिवसः।

**हेमलेखः**—न हि। ननु भृशशीतोऽयं दिवसः । वातश्च तावदुत्तरागतः।

**अश्रुकः**—ननु देव शीतप्राय एवायं दिवसः ।

**हेमलेखः**—तथापि तु मन्ये भृशं खलु निर्वातस्तप्तश्चायं दिवस इति । अन्यथा मे प्रकृतिः—

**अश्रुकः**—देव। अत्यन्तमेव तथा। भृशमेव निर्वातोऽयं दिवसः। यथा खलु—न खलु वक्तुं पारयामि कथमिति। अथ देव महाराजेनाज्ञप्तोऽस्मि भवत्समीपमावेदयितुं तत्रभवता भवत्प्राणानुद्दिश्य महान् पणः कृत इति। आर्य्य । एष तावद् वृत्तान्तः—

**हेमलेखः**—प्रसीद। स्मर तावत्—

(हेमलेखः शिरस्त्रपरिधानाय तं प्रेरयति।)

**अश्रुकः**—मैवम् । शपे खलु शपे खल्वात्मनः प्रीत्यर्थमेतत् । आर्य्य । इतः खलु लीढास्यः सद्यो राजसभां प्रत्यागतः । सत्यं खल्वसौ निरञ्जन आर्य्यपुरुषस्तैस्तैरतिसम्भाव्यैर्गुणविशेषैर्विभूषितः सातिशयविनीतसमाजः समधिकललितवृत्तिश्च । ननु तं यथार्थमनुवर्णयामि चेदसौ खलु कुलीनवर्गस्योपमानपत्रं निर्देशकपञ्जिर्वा भवति । द्रक्ष्यति ह्यस्मिन् भवान् कुलीनजनेनाभिमतस्य गुणमात्रस्य महानिधिमिति ।

**हेमलेखः**—आर्य्य । अत्रभवतः समनुवर्णनं किल न तस्य किञ्चन क्षिणोति। यद्यपि जाने परिगणनापूर्वकं हि तद्गुणविभजनं मनसो गणना-सामर्थ्यमेव विमोहयेत् । तथापि त्वस्य त्वरितगतितया न किञ्चना-नुमापयेदिति । किन्तु भूतार्थव्याहारेण तं प्रशंसानि चेन्महतः सत्त्व-स्याधारोऽयमिति तर्कयामि । तादृशश्चास्मिन्नेकान्तदुर्लभानां गुणानां सन्निपातो यथा यथोचितेन वाग्व्यापारेण भणामि चेदादर्श एवास्य प्रतिविम्बम् । यः कश्चन चैनं विडम्बयेदस्य च्छायामात्रमेवासौ न ततोऽधिक इति ।

**अश्रुकः**—अत्रभवता देवेन खलु सोऽयममोघमनुवर्णितः ।

**हेमलेखः**—आर्य्य । को नामात्र प्रबन्धः । कथं खलु भद्रमुखमस्मदीयैरसंस्कृतै-र्वचनोच्छ्वासैराच्छादयामः ।

**अश्रुकः**—आर्य्य । किमिति ।

**होरास्यः**—अन्यभाषयाववोधो न सम्भवति किम् । आर्य्य । सत्यं खलु तत्र शक्ष्यति भवान् ।

**हेमलेखः**—किमर्थाः खल्विमा आर्य्यपुरुषे सम्भावनोक्तयः ।

**अश्रुकः**—किं लीढास्ये ।

**होरास्यः**—अस्य कोषः शून्य एव । सर्वाणि ह्यस्य महार्थपदानि विनियुक्तानि ।

**हेमलेखः**—आर्य्य । ननु तस्मिन् ।

**अश्रुकः**—जाने खलु नानभिज्ञो भवान् ।

**हेमलेखः**—आर्य्य । ननु तथैव मां यदि जानीथाः । तथापि शपे खलु यदि तथैव जानीथास्तन्मे न बहुमानाय स्यात् । आर्य्य । ततः ।

**अश्रुकः**—किमुत्कर्षो लीढास्य इत्यत्र नानभिज्ञो भवान् ।

**हेमलेखः**—नाहमेतदङ्गीकुर्य्याम् । अन्यथा समानोत्कर्षतयात्मानं बहुमन्येय । स एव तु पुरुषं साधु वेद य आत्मानं वेद ।

**अश्रुकः**—आर्य्य । ननु तस्य शस्त्रव्यवहार इत्यहं मन्ये । यथा तु लोकेन तस्मिन् प्रसिद्धिरारोपिता गुणप्रकर्षे स निःसपत्नो भवति ।

**हेमलेखः**—किमस्य शस्त्रम् ।

**अश्रुकः**—कृपाणश्छुरिका चेति ।

**हेमलेखः**—तौ हि तस्य शस्त्रेषु द्वयम् । ननु ततः ।

**अश्रुकः**—आर्य्य । राज्ञा खलु तेन सह षण्णां म्लेच्छदेशीयानामश्वानां पणः कृतः । तदर्थञ्च यथाहं विज्ञापितस्तेन षण्णां प्रांशुदेश्यानां कृपाणानामसिपुत्रिकानाञ्च मेखलाचर्मपट्टाद्यनुबन्धसहितानां परिपणो निक्षिप्तः । शपे खलु तत्र बाहानां मध्ये त्रयं प्रकाममनोऽभिरामं प्रकाममुष्ट्युपयुक्तञ्च तद्धि सातिशयललितं बाहत्रयमतिभूयिष्ठकल्पनोपपन्नञ्च ।

**हेमलेखः**—ननु किं बाहेति निर्दिशति भवान् ।

**होरास्यः**—जाने खलु भवान् यावदवबोधं प्रान्तव्याख्यानेन गृहीतार्थः स्यादिति ।

**अश्रुकः**—आर्य्य । बाहा नाम चर्मपट्टाः ।

**हेमलेखः**—एतत् पदं नामाधिकं प्रस्तुतापेक्षि स्याद् यद्यस्माभिर्गोलासनमस्मत्पार्श्वे बाह्येत । तावदिमे चर्मपट्टाः सन्त्विति प्रार्थये । ननु ततो ब्रूयाम् । षड् म्लेच्छदेशीया अश्वाः षण्णां प्रांशुदेश्यानां खड्गानां सानुबन्धानां भूयिष्ठकल्पनोपपन्नबाहत्रयसहितानां स्थाने विद्यन्ते । स एव दीनदेश्यस्य स्थाने प्रांशुदेश्यः पणः स्थितः । कथं खलु यथाह भवान् स परिपणो निक्षिप्त इति ।

**अश्रुकः**—आर्य्य । महाराजेन खलु पणः कृतो यद् भवन्तं तञ्चान्तरा द्वादशानां प्रहाराणां मध्ये स प्रहारत्रयादधिकेन भवन्तं नातिशयीत । तेन[1] च भवत्कृतानां नवानां प्रहाराणां स्थाने द्वादश प्रहारा दास्यन्त इति पणः कृतः । एतच्चाविलम्बितमेव परीक्ष्येत यदि देवेन प्रतिवचनमनुमतं स्यात् ।

**हेमलेखः**—यद्यहं नेति ब्रूयाम् ।

**अश्रुकः**—देव । परीक्षायां भवतः प्रतिद्वन्द्वित्वमिति मन्ये ।

**हेमलेखः**—आर्य्य । अहमत्र बहिर्द्वारशालायां पादक्रमेण गच्छामि । यदि महाराजाय रोचत एष मेदिवसस्योच्छ्वासकालः । क्रीडाखड्गौ तावदानीयेताम् । यदि भद्रमुखोऽभिरोचयति देवश्च स्थिरव्यवसायः शक्तश्चेत् तत्पक्षेऽहं जयेयम् । अन्यथात्मनोऽयशसो यदृच्छाप्रहारलाभाच्चाधिकं न लभेय ।

---

१. लीढास्येनेत्यर्थः ।

**अश्रुकः**—किमित्थम्भूतं भवन्तं प्रतिवेदयामः ।

**हेमलेखः**—आर्य्य । एतदर्थान्तं भवत्स्वभावपर्य्याप्तं वाग्विलासमतिक्रम्य ।

**अश्रुकः**—देवाय कार्य्यं मे निवेद्यते ।

**हेमलेखः**—भवते । भवते । (निष्क्रान्तोऽश्रुकः ।) साध्वनेनात्मा निवेदितः । तदर्थञ्चान्यभाषा न विद्यते ।

**होरास्यः**—असौ टिट्भोऽण्डपुटशिरस्कोऽपक्रामति ।

**हेमलेखः**—स किल प्रथममाचारं प्रत्यपद्यत ततो मातुः स्तनं पपौ । एवं सोऽन्ये च बहवस्तद्गणवर्त्तिनो येषु जाने विमूढो लोकोऽयं गाढमनुरज्यते केवलं युगभाषाविधिं व्यवहारप्रवृत्तिञ्च प्रापुः । तच्च निःसारसंग्रहमात्रं येन तेऽतिमन्दस्फुटमतोदाहरणे सर्वथा प्रसिध्यन्ति । ननु तान् परीक्षार्थं प्रध्मापय ते च बुद्बुदा इव भिद्यन्ते ।

(ततः प्रविशति कश्चिद् भूम्यधिकारी ।)

**भूम्यधिकारी**—देव । महाराजस्तरुणाश्रुकमुखेन भवन्तं विज्ञापितवान् । तेन चास्मै निवेदितं तत्रभवान् बहिर्द्वारशालायां देवं प्रतीक्षत इति । देवेन च किं भवान् लीढास्येन सार्द्धमसिक्रीडां रोचयत्युत कालक्षेपं साधु मन्यत इत्युपलम्भाय प्रेषितोऽस्मि ।

**हेमलेखः**—दृढव्यवसायः स्थितोऽस्मि । स च व्यवसायो राज्ञः प्रसादमनुवर्तते । यदि तस्य सज्जीभावो व्यक्तीक्रियते ननु सज्जोऽस्मि । अद्य वान्येद्युर्वा यदि तावदद्येव समर्थो भवेयम् ।

**भूम्यधिकारी**—देवो देवी तथान्ये च सर्वेऽवतरन्ति ।

**हेमलेखः**—यथाकालमेवावतरन्ति ।

**भूम्यधिकारी**—देवी प्रार्थयते लीढास्यं प्रति त्वया सान्त्वमाभाषणीयं यावत्त्वमसिक्रीडायां नापतेरिति ।

**हेमलेखः**—सम्यगुपदिष्टोऽस्मि तत्रभवत्या ।

(निष्क्रान्तो भूम्यधिकारी ।)

**होरास्यः**—देव । भवानस्मिन् पणे विजितो भविष्यति ।

**हेमलेखः**—नाहमेवं मन्ये । यावत् स प्रांशुं गतस्तावदहमपि सतताभ्यासयुक्तोऽभवम् । नूनं वैषम्येनाहं जेष्यामि । तथापि खलु त्वं न चिन्तयेः कथं नु कृत्स्नं हृदयमद्य मे सम्पीड्यते । किमेतेन तु साम्प्रतम् ।

**होरास्य:**—भद्र देव। मैवम्।

**हेमलेख:**—बालिश्यमेवैतत्। तादृश्येषा हृदयस्य शङ्का यादृशी तु स्त्रीजनमुद्वेजयेत्।

**होरास्य:**—यत्ते हृदयमाशङ्कते तदनुवर्त्तस्व। अहमपि तेषामिहाभ्यागमनमग्रत एव निवारयामि ब्रवीमि च नायं सज्ज इति।

**हेमलेख:**—नाण्वपि। वयं निमित्तमुपेक्षामहे। चटकस्य निपातोऽपि दैवेन विशेषतो विधीयते। सोऽद्यैव चेदुपस्थितो न तर्हि परस्ताद् भविष्यति। स परस्ताच्चेन्न भविष्यति तर्ह्यद्यैवोपस्थास्यति। सोऽद्यैव चेन्नोपस्थितस्तथापि तु परस्ताद् भविष्यति। तत्सज्जीभाव एव सर्वस्वम्। यद् विहाय प्रैति तन्न कश्चनाधिगच्छति। किं तत्र यद्यकाल एव प्रैति।

(ततः प्रविशति राजा राज्ञी लीढास्यो भूम्यधिकारिणोऽश्रुकः क्रीडाखङ्गादिमादाय परिजनश्च।)

**राजा**—एहि। हेमलेख। एहि। मत्त इमं हस्तमादत्स्व।

(राजा लीढास्यस्य हस्तं हेमलेखस्य हस्ते निदधाति।)

**हेमलेख:**—आर्य्य। क्षम्यतामयं जनः। त्वय्यहमपराद्धोऽस्मि। यथा भवानार्य्यपुरुषो ननु क्षम्यतां मेऽपराधः। अत्रभवन्तो विदुर्भवतापि च श्रुतपूर्वं स्यात् कथं खलु व्यामोहेन बाधिता वयमिति।

**यच्च किल मयाचरितं त्वत्स्वभावमानाभिमतविरुद्धम्।**
**एषोऽहं घोषयामि मतिविभ्रमः स बभूवेति॥३७॥**

किमसौ हेमलेख आसीद् यो लीढास्ये कृतापराधः। न जातु हेमलेखः। कुतः।

**विभ्रष्टश्चेद् हेमलेखः स्वरूपाद्**
**लीढास्येऽसौ सापराधोऽन्यरूपः।**
**नैतत्पापं हेमलेखः करोति**
**नाङ्गीकुर्यात् तत्कृतं हेमलेखः॥३८॥**

कस्तर्हि तत्कर्त्ता। तस्योन्मादः। एवञ्चेत्।

हेमलेखोऽपि तेष्वासीत् सोऽपराद्धस्तु येषु चित् ।
हेमलेखस्य शत्रुत्वे वर्त्तते चात्मविभ्रमः ॥३६॥

आर्य्य । अस्याञ्च परिषदि—

स्खलितचरितं साभिप्रायं न मे तदभूदिति
विशदवचनं दाक्षिण्येन ग्रहीतुमतोऽर्हसि ।
कथमपि मया बाणक्षेपाद् गृहोपरि लीलया
सपदि चरितो भ्रातृद्रोहः स एष यदृच्छया ॥४०॥

लीढास्यः—स्वभावेनाश्वस्तोऽस्मि यद्यपि चात्र तन्नियतप्रवृत्तिः ।
वैरनिर्यातनार्थं भूयिष्ठं मामुद्बोधयेत् ॥४१॥

मानार्थे ननु निरपेक्षतां गतोऽहं
वैरस्य प्रतिशमनं न रोचयामि ।
यावत्ते विदुरिह सिद्धमानवित्ता
मानेन प्रतिकृतशान्तिरस्तु सेति ॥४२॥

तावन्मया गृहीतं ते मह्यं प्रीतिसमर्पणम् ।
शुद्धप्रीतिमयमिव नैतस्यापकरोमि ते ॥४३॥

हेमलेखः—तत्तेऽद्य प्रत्ययाद् भ्रातरङ्गीकृतं वचो मया ।
भ्रातुः पणञ्च संशुद्धं क्रीडिष्यावः परस्परम् ॥४४॥

क्रीडाखड्गौ तावदुपनीयेताम् । एहि तावत् ।

लीढास्यः—एहि । मदर्थमेकमुपहर ।

हेमलेखः—लीढास्य । अहमेव ते धातुपत्रं भविष्यामि । कुतः ।

खड्गानभिज्ञे मयि नैपुणं ते
पुरा विभाति द्युतिमत्प्रकाशम् ।
यथैव नक्तं गहनान्धकारे
नक्षत्रमत्यायतदीप्तिबद्धम् ॥४५॥

**लौढास्यः**—आर्य्य । ननु मामुपहसति भवान् ।

**हेमलेखः**—एतेन हस्तेन खलु शपे न हि ।

**राजा**—वत्स । अश्रुक । क्रीडाखड्गौ तावदनयोरुपहर । भ्रातृज हेमलेख । पणं विदितोऽसि त्वम्[1] ।

**हेमलेखः**—देव । साधु विदितः । अयुक्ततरे पक्षे वैषम्यविधानेन भवता प्रसादो दर्शितः ।

**राजा**— नात्र बिभेमि वत्सोभौ युवां मया विलोकितौ ।
यत्स वैशिष्ट्यमापन्नस्ततो वैषम्यमाहितम् ॥४६॥

**लौढास्यः**—एष तावदतिगुरुः । अपरं पश्यानि ।

**हेमलेखः**—एष मे युज्यते । एते क्रीडाखड्गाः सर्व एव समानदैर्घ्याः[2] ।

(तौ क्रीडार्थमुद्युक्तौ भवतः ।)

**अश्रुकः**—भद्र देव । अथ किम् ।

**राजा**—अस्मिन् भोजनाधारे सुरापात्राणि ममोपहर । ततश्च—

आद्यं वा प्रहृतं द्वितीयमथवा श्रीहेमलेखस्य चे-
दाघाते प्रतिहन्ति चेत् पुनरसौ द्वन्द्वे तृतीयेऽथवा ।
प्राकारा ज्वलनं वमन्तु निखिलैर्गोलासनास्यैर्मुहुः
प्राणार्थं किल तस्य भूपतिरहो पानोत्तमं पास्यति ॥४७॥

तथाहि ।

दीनार्कराज्याधिकृतैश्चतुर्भि-
र्धृतं किरीटे यदिदं क्रमेण ।
ततोऽपि सम्भाव्यतरं स एतन्
मुक्ताफलं क्षेप्स्यति पानपात्रे ॥४८॥

पात्राणि तावदुपनय । किञ्च ।

---

१, २. इति काकुः ।

भेर्य्यः सम्प्रति नोदयन्तु सहसा तूर्य्यान् प्रमन्द्रस्वना-
स्तूर्य्यास्ते पुनरेव वीरपुरुषान् गोलासनव्यापृतान् ।
गो॰ासाश्च दिवं यथाक्रममथ द्यौश्चापि पृथ्वीमिमां
पानीयं नृपतिः पिबत्ययमहो सूनोश्चिरं भूतये ॥४६॥

एतम् । उपक्रमेथां तावत् । भवन्तश्च न्यायाधीशा अप्रमत्तनयना भवन्तु ।

**हमलेखः**––आर्य्य । एहि तावत् ।

**लीढास्यः**–देव । एहि। (तौ क्रीडतः ।)

**हेमलेखः**––प्रहृतम् ।

**लीढास्यः**––नहि ।

**हेमलेखः**––विचारस्तावत् ।

**अश्रुकः**––प्रहृतम्। सुव्यक्तं प्रहृतम् ।

**लीढास्यः**––भवतु । पुनस्तावत् ।

**राजा**––तिष्ठ । पानीयं ममोपहर । हेमलेख । एतन्मुक्ताफलं त्वदर्थम् । एतच्च तव भूतये ।

(नेपथ्ये तूर्य्यघोषो गोलासनगर्ज्जितञ्च समुच्चरतः ।)

पानपात्रमस्योपहर ।

**हेमलेखः**––प्रथममिदं द्वन्द्वं क्रीडिष्यामि। अपनयतु तावदेतत् । एहि ।

(तौ क्रीडतः ।)

अपरं प्रहृतम् । किमात्थ त्वम् ।

**लीढास्यः**–स्पृष्टम् । स्पृष्टम् । प्रतिपद्ये तावत् ।

**राजा**––आवयोः पुत्रो जेष्यति।

**राज्ञी**––स्फीतोऽयम् । उच्छ्वसितश्च । हेमलेख । एहि । मदीयां मुखमार्ज्जनीं गृहीत्वा भ्रुवौ ते प्रमार्ज्जय । हेमलेख । एषा राज्ञी तव विजयार्थ-मतितरां पिबति ।

**हेमलेखः**––भद्रे । भवति ।

**राजा**––गर्त्तरुदे । मा खलु पिब ।

**राज्ञी**––देव । ननु पिबामि । प्रसीद ।क्षम्यतामयं जनः । (पिबति ।)

राजा—(स्वगतम्) विषदिग्धमिदं पात्रम्। व्यतीतकालन्त्विदानीम्।

हेमलेखः—भवति। नैतावतापि तावत् पातुमुत्सहे। अचिरात् पिबामि।

राज्ञी—एहि। तव मुखं प्रमार्ज्जयानि।

लीढास्यः—देव। अथैनमाहनिष्यामि।

राजा—नैवं मन्ये।

लीढास्यः—(स्वगतम्) तथाप्येतत् प्रायेण मे चेतसो नानुकूलम्।

हेमलेखः—लीढास्य। एहि तावत् तृतीयार्थम्। ननु प्रक्रीडसि त्वम्।

प्रसीद सर्ववेगेन मयि प्रहर्त्तुमर्हसि।
शङ्के त्वमातुरेणेव प्रक्रीडसि मया सह ॥५०॥

लीढास्यः—एवमाह भवान्। एहि तावत्। (तौ क्रीडतः।)

अश्रुकः—न किञ्चन कस्यापि प्रहृतम्।

लीढास्यः—एषोऽहं त्वयि सन्नद्धः। (लीढास्यो हेमलेखमाहन्ति। ततो नियुद्धे प्रवर्तमाने तावन्योऽन्यस्य कृपाणमाददाते। हेमलेखश्च लीढास्यमाहन्ति।)

राजा—विश्लेषयेमौ। इमौ हि संरब्धौ।

हेमलेखः—न हि। एहि पुनः।

(राज्ञी पतति।)

अश्रुकः—भोः। देवीं तावदवेक्षत।

होरास्यः—उभयोरपि पक्षयो रुधिरपातः। देव। कथमेतत्।

अश्रुकः—लीढास्य। कथं न्वेतत्।

लीढास्यः—कथम्। अश्रुक।

स्वपाशं लम्भितस्तावद् यथास्मि वनकुक्कुटः।
स्वेन विश्वासभङ्गेन स्थाने चात्मा मया हतः ॥५१॥

हेमलेखः—कथं नु राज्ञी।

**राजा**—अनयो रुधिरदर्शनेन मूर्छिता खल्वेषा ।

**राज्ञी**—नहि । नहिं । पानीयं पानीयम् । अयि वत्स हेमलेख । पानीयं पानीयम् । तेनास्मि प्रयुक्तविषा । (म्रियते ।)

**हेमलेखः**—अहो शाठ्यम् । भोः । द्वारं तावत् सार्गलं क्रियताम् । किं विश्वासभङ्ग इति । एनं मृगयध्वम् ।

**लीढास्यः**—हेमलेख । एषोऽत्र । हतोऽसि हेमलेख । तथाहि ।

**नास्त्येव खलु लोकेऽस्मिन् भेषजं तव भूतये ।**
**इत्थंगतश्च विधिना यावद्दण्डं न जीवसि ॥५२॥**

**तन्निमित्तञ्च कूटास्त्रं पाणौ ते पश्य विद्यते ।**
**अरुग्नीकृतधारञ्च यद् विषदिग्धमेव च ॥५३॥**

**दुर्वृत्तं तदिदं मे मय्येव साम्प्रतं परावर्त्तते ।**
**अत्रैवाद्य भो शये न क्वापि पुनरुत्थानाय ॥५४॥**

माता खलु ते प्रयुक्तविषा । अतः परं न शक्नोमि । असौ राजासौ राजा खल्विहापराध्यति ।

**हेमलेखः**—किमग्रमपि विषदिग्धम् । ततो विषात्मनो गतिं गच्छ ।

(राजानमाहन्ति ।)

**सर्वे**—राजद्रोहो राजद्रोहः ।

**राजा**—अहो । अद्यापि रक्षत मां बान्धवाः । केवलमाहतोऽस्मि ।

**हेमलेखः**—इहाद्य कामुक[1] नरघातक दीनदेश्य पुरुषाधम पानीयमेतत् पिब । किं ते रत्न[2]मिहैव तिष्ठति । मातरं तावदनुगच्छ ।

(राजा म्रियते ।)

---

१. भ्रातृदारगामिन्नित्यर्थः ।
२. मुक्ताफलं स्त्रीरत्नञ्च ।

**लीढास्यः**——असौ यथान्यायमुपचरितः। इदं हि विषममुनैव संहितम्। महाभाग हेमलेख। मया सह क्षमावाक्यविनिमयं करोतु भवान्। कुतः।

मम मृत्युः पितुश्चैव मृत्युस्त्वयि न वर्त्तताम्।
अथापि भवतो मृत्युर्न तावन्मयि वर्त्तताम् ॥५५॥

(म्रियते।)

**हेमलेखः**——देवास्त्वामस्मान्मोचयन्तु। अहमपि त्वामनुगच्छामि। हतोऽस्मि होरास्य। हा देवि। आमन्त्रये त्वाम्। यूयमपि ये नाम विवर्णा वेपमानाश्च——

अत्याहितं किमपि पश्यथ वर्त्तमानं
सामाजिकाः किमु तथा किमु मूकसत्त्वाः।
कालान्तरे तदयि वः प्रतिवेदयेयं
दुर्मोच एव ननु मृत्युकरग्रहोऽयम् ॥५६॥

भवतु नाम। होरास्य। हतोऽस्मि।

त्वन्तु जीवसि सौहार्द्दादिमं जनं सहेतुकम्।
सर्वेभ्योऽश्रद्दधानेभ्यः प्रख्यापयितुमर्हसि ॥५७॥

**होरास्यः**——न तथा दीनदेश्योऽस्मि यथास्मि पूर्वरोमकः।
नेह प्रत्ययमाधत्स्व पेयशेषस्तु वर्त्तते ॥५८॥

**हेमलेखः**—यथासि पुरुषस्तावत् पात्रं मे दीयतां सखे।
मुच्यतां ननु दैवेन तदादास्ये सुनिश्चितम् ॥५९॥

किञ्च।

साधो भो होरास्य प्रायः किमिव मे विगीतं नाम।
अविज्ञातेष्वर्थेषु तदेवं मद्दूर्ध्वमतिजीवेत् ॥६०॥

यस्मात् तवास्मि हृदये निहितः कदाचित्
तस्मात् क्षणं विरम दिव्यसुखोपलम्भात् ।
लोके च जीव गुरुदुःखमये कथञ्चिद्
गाढव्यथं मम कथापरिकीर्त्तनार्थम् ॥६१॥

(नेपथ्येऽदूरतः सैनिकयात्रा गोलासनगर्ज्जितञ्च ।)

कोऽयं साम्परायिको निर्घोषः ।

**अश्रुकः**—एष कुमारः स्फूर्तवीर्यः पोलकदेशाद् विजयेन प्रत्यावृत्त उल्लण्ड-राजदूतेभ्य इमं साम्परायिकं ध्वनिवर्षमातनोति ।

**हेमलेखः**—हा हतोऽस्मि होरास्य । बलवत् खलु कालकूटं ममात्मान-मभिभवति । उल्लण्डवार्ताश्रुतये न जीवितः स्याम् । तथापि स्फूर्तवीर्यशिरसि विनिवेश्यमानं महाराजकिरीटं पश्यामि । सवश्च म्रियमाणस्य मे प्रतिपत्तिवचनं लभताम् ।

तस्मै विज्ञाप्यतामेतद् वृत्तान्ताश्चैव सर्वशः ।
यैरस्मि प्रेरितस्तावत् ततः शान्तिरिति ध्रुवम्[1] ॥६२॥

(म्रियते ।)

**होरास्यः**—अद्य तावत्—

प्रभज्यते हृदयमिदं महात्मनो
नृपात्मज स्तिमित सुरात्रिरस्तु ते ।
सुरोत्तमाः सपदि भवन्तमादरात्
कलस्वनैर्दधतु दिवि प्रशान्तये ॥६३॥

---

१. या शान्तिस्तदेव ध्रुवमिति च ।

किं नु खलु भेरीनाद इत एव प्रसर्पति ।

(नेपथ्ये सैनिकयात्रा ।)

(ततः प्रविशति स्फूर्त्तवीर्य उल्लण्डराजदूताश्च सहेतरैः ।)

**स्फूर्त्तवीर्यः**—क्व नु खल्विदं दृश्यम् ।

**होरास्यः**—किं नु खलु तद् यद् द्रक्ष्यति भवान् । शुचो विस्मयस्य वा पदञ्चेदलं तावन्मृगयित्वा ।

**स्फूर्त्तवीर्यः**—एतच्छवस्थानं प्रतिविनाशाय समुत्क्रोशतीव ।

गर्वोद्धत त्वमयि जीवविनाशहेतो
स्फीतोदरे किमिव तेऽशनमद्य लब्धम् ।
एकेन यत्त्वमधुना प्रहृतेन सर्वा-
स्तांस्तामिमान् सरुधिरं हृतवान् कुमारान् ॥६४॥

**प्रथमो राजदूतः**—दुष्प्रेक्ष्यमेतद् दृश्यम् । किञ्च ।

संप्राप्ता न हि नः प्रवृत्तिरचिरादुल्लण्डदेशादियं
श्रोतुश्च स्तिमिता पुनः श्रुतिरियं गाढावसन्ना चिरात् ।
वक्तव्यं किल ते निदेशकरणेऽमोधश्रमोऽसौ नृप-
स्त्वद्वार्त्तावहकिङ्करौ विनिहतावासाद्य तेनेति च ॥ ६५ ॥

कुतो नु वयमेतदर्थमनुग्रहवचनं लभेमहि ।

**होरास्यः**—न खलु तन्मुखाद् यद्यप्यस्य वोऽनुग्रहवचने जीवितसामर्थ्यं स्यात् । न ह्यसौ तयोः प्राणहरणाय जातु निदेशं ददौ । अपि तु—

यस्माद्देशान्तराभ्यां तुमुलवधपदं यूयमभ्यागताः स्थ
यूयञ्चोल्लण्डदेशात् सममिह समरात् पोलकैश्चाथ यूयम् ।
उच्चैर्मञ्चे जनानां नयनविषयतां प्राप्यतां वीरसंघो
येन ब्रूयामकस्मादपरिचितकथाव्यक्तये सर्वलोकान् ॥६६॥

इत्थञ्च—

वृत्तं कामप्रसक्तं गुरुवधपरुपं श्रोष्यथाश्रोत्रपेयं
धीविभ्रंशञ्च कष्टं पुरुषनिहननं दैवगत्यापि तावत् ।
नाशञ्च व्याजसिद्धं सरभसमभितो भूतगत्या प्रयुक्तं
कार्य्यंभ्रान्त्या तथान्ते शिरसि निपतितं दुष्कृतामेव सर्वम् ।।६७।।

सर्वं खल्वेतद् यथावृत्तमनुवर्णयानि ।

स्फूर्त्तवीर्यः--एतच्छ्रोतुं वयं त्वरयाम। प्रकृतिश्रेष्ठांश्चात्र सभायामाह्वयाम। अहमपीदानीं राज्यश्रियं सविषादमाददे । कुतः ।

यच्छ्रूयते राज्यपदे त्वदीये
ममाधिकारः पुरुषैश्चिराय ।
तदेव दैवादनुकूलगत्या
तस्मिन् मनो मे प्रवणीकरोति ।।६८।।

होरास्यः—तदप्यहं प्रवक्ष्यामि यन्निमित्तमपेक्षितम् ।
यच्च तद्वचनाल्लब्धमन्ये वक्ष्यन्ति तत्तथा ।।६९।।

तत्साध्यतां त्वरितमूर्ज्जितमञ्चदृश्यं
यावत्प्रमन्युविषमाः पुरुषा भवेयुः ।
दुर्दैवमन्यदपि तन्मतिविभ्रमान्तं
नैवापतेत् किल यथा कपटप्रयुक्तम् ।।७०।।

स्फूर्त्तवीर्यः--चत्वारः सैन्याध्यक्षा हेमलेखं योद्धृवरमिव मञ्चमध्यारोपयन्तु । कुतः ।

नृपतिचरितं दिष्ट्या भूयात् परीक्ष्यमिहास्य चे-
न्नृपतिविहितं कृत्वा कार्य्यं यशःसुरभिर्भवेत् ।
दधतु कुशलं प्रोच्चैः प्रेते सनिःस्वनयात्रया
समरविधिभिश्चान्यैर्वीरे समागतसैनिकाः ।।७१।।

उद्वाह्यन्तां वीरदेहाः ।

---

१. हेमलेखवचनात् ।

एतावद् दृश्यपर्य्यन्तं संग्राममूर्द्धिन शोभते ।
इह त्वस्थानमायातमयुक्तमिव दृश्यते ॥७२॥

गच्छ । गोलासनगोलास्त्रप्रक्षेपणाय नोदय सैनिकान् ।

(गम्भीरसैनिकयात्रा । वीरदेहानादाय निष्क्रान्ताः सर्वे । तदनु युद्धास्त्रसमुदयस्य महाध्वनिः[1] समुत्थितः ।)

इति द्वितीयं दृश्यम् ।

इति पञ्चमोऽङ्कः ।

इति समाप्तमिदं

दीनार्कराजकुमारहेमलेखम् ।

१. वागर्थसमुदयात्मकस्य ग्रन्थस्यापि तावद् महाध्वनिः सुधीभिः स्वयं विभावनीय इति शम् ।

# परिशिष्टम् (क)।

## छन्दोनिदर्शनम्।

(१) दीनाकंराजकुमारहेमलेखे प्रयुक्तानां छन्दसां नामानि तत्र तत्र श्लोकानां संख्याश्च निदर्श्यन्ते।

| क्रम-संख्या | छन्दः | श्लोकसंख्या |
|---|---|---|
| १. | स्रग्धरा | १० |
| २. | आर्या | ८१ |
| ३. | अनुष्टुप् | ८८ |
| ४. | वसन्ततिलकम् | ६८ |
| ५. | शिखरिणी | १६ |
| ६. | मालिनी | २१ |
| ७. | शार्दूलविक्रीडितम् | ८० |
| ८. | वंशस्थविलम् | ३० |
| ९. | पुष्पिताग्रा | ४ |
| १०. | मन्दाक्रान्ता | १९ |
| ११. | उपजातिः (क) (इन्द्रवज्रोपेन्द्रवज्रामिश्रा) | ३५ |
| १२. | द्रुतविलम्बितम् | ४ |
| १३. | वियोगिनी | ७ |
| १४. | हरिणी | १४ |
| १५. | मालभारिणी | ५ |
| १६. | इन्द्रवज्रा | ६ |
| १७. | शालिनी | ५ |
| १८. | प्रहर्षिणी | ८ |
| १९. | रथोद्धता | ८ |
| २०. | रुचिरा | १ |

| | | |
|---|---|---|
| २१. | उपजातिः (ख) (इन्द्रवज्रावंशस्थविलमिश्रा) | १ |
| २२. | इन्द्रवंशा | ५ |
| २३. | उपजातिः (ग) (उपेन्द्रवज्रावंशस्थविलमिश्रा) | १ |
| | साकल्येन | ५१७ |

(२) दीनार्कराजकुमारहेमलेखे प्रयुक्तानां श्लोकानामङ्कप्रविभागक्रमेण संख्याः केवलं निदर्श्यन्ते ।

| | श्लोकसंख्या |
|---|---|
| प्रथमेऽङ्के | १०८ |
| द्वितीयेऽङ्के | ७६ |
| तृतीयेऽङ्के | १४९ |
| चतुर्थेऽङ्के | ११२ |
| पञ्चमेऽङ्के | ७२ |
| साकल्येन | ५१७ |

# परिशिष्टम् (ख)।

## पात्रादिनामानुवादनिदर्शनम्।

| (१) मूलम् | नामानुवादः |
|---|---|
| Shakespeare | सेक्षपीवर |

(२) पात्रवर्गस्य नामोदाहरणे मूलैः सह नामानुवादा निदर्श्यन्ते।

| मूलम् | नामानुवादः |
|---|---|
| Claudius | क्लेदास |
| Denmark | दीनार्क |
| Hamlet | हेमलेख |
| Polonius | पुरुन्यास |
| Horatio | होरास्य |
| Laertes | लीढास्य |
| Voltimand | भूरिमुण्ड |
| Cornelius | कर्णेलास्य |
| Rosencrantz | रुजाक्रान्त |
| Guildenstern | गूढास्तीर्ण |
| Osric | अश्रुक |
| Marcellus | मृषालास्य |
| Bernardo | वर्णार्द्र |
| Francisco | प्राणशिरस्क |
| Reynaldo | रणार्द्र |
| Fortinbras | स्फूर्तवीर्य |
| Norway | नरोह |
| English | उल्लण्ड |
| Gertrude | गर्तरुदा |
| Ophelia | उपाला |

(३) अन्यत्र ग्रन्थमध्ये मूलैः सह नामानुवादा निदर्श्यन्ते।

| मूलम् | नामानुवादः | पृष्ठम् |
|---|---|---|
| Elsinore | आलस्यनीड | १ |
| Dane | दीन | २ |
| Sled | श्लथ | ४ |
| Polack | पोलक | ४ |
| Rome | रोम | ५ |
| Julius | ज्वालास्य | ५ |
| Neptune | वरुण[१] | ५ |
| France | प्रांशुदेश | ९ |
| Wittenberg | विटेन्द्रवर्ग | ११ |
| Hyperion | सवितृ[१] | १३ |
| Satyr | पुमज[१] | १३ |
| Niobe | पाषाणमूर्ति[१] | १३ |
| Hercules | भीमसेन[१] | १३ |
| Rhenish | अग्र्य[१] | २४ |
| Nemean (lion) | महाबल[१] | २६ |
| Lethe (river) | स्मृतिविभ्रमा[१] | २९ |
| Saint Patrick | पात्रकमुनि | ३३ |
| Paris | पुरीश | ३७ |
| Roscius | रसास्वास | ५७ |
| Seneca | सेनाक | ५७ |
| Plautus | प्लुतास | ५७ |
| Jephthah | ज्येष्ठ | ५७ |
| Israel | उस्राल | ५७ |
| Aeneas | एणाक्ष | ५९ |
| Dido | दीना | ५९ |
| Priam | प्रायाम | ५९ |

१. एतच्चिह्निताः सर्वेऽर्थानुवादा बोध्याः।

| मूलम् | नामानुवादः | पृष्ठम् |
|---|---|---|
| Pyrrhus | पीडास | ५९ |
| Hyrcanian (beast) | व्याघ्रेन्द्र[1] | ५९ |
| Greek | ग्रीष्म | ६० |
| Ilium | शत्रुहर्म्य[1] | ६० |
| Cyclop | स्रष्टृ[1] | ६१ |
| Mars | भौम[1] | ६१ |
| Hecuba | हेतुका | ६१ |
| Gonzago | गुञ्जाग | ६२ |
| Termagant | तूर्णघण्ट | ७५ |
| Herod | हीरद | ७५ |
| Christian | कृष्टीय | ७६ |
| Vulcan's stithy | आग्नेयवेदि[1] | ७८ |
| Julius Caesar | ज्वालास्यसीसार | ७९ |
| Brutus | व्रतास | ७९ |
| Capitol | यूपतारप्रासाद[1] | ७९ |
| Phoebus | विरोचन[1] | ८१ |
| Neptune | प्रचेतस्[1] | ८१ |
| Tellus | पृथ्वीश्री[1] | ८१ |
| Hymen | प्रजाधिपति[1] | ८१ |
| Vienna | भिन्ना | ८५ |
| Baptista | पापिष्ठा | ८५ |
| Lucianus | रोषन्यास | ८५ |
| Hecate | चामुण्डा[1] | ८५ |
| Italian | इतालीय | ८६ |
| Damon deer | प्रियसख[1] | ८६ |
| Jove | महेन्द्र[1] | ८६ |
| Soul of Nero | रामभाव[1] | ९१ |

१. एतच्चिह्निताः सर्वेऽर्थानुवादा बोध्याः ।






| मूलम् | नामानुवादः | पृष्ठम् |
|---|---|---|
| Hyperion | सूर्य[1] | १०० |
| Jove | विष्णु[1] | १०० |
| Mars | भौम[1] | १०० |
| Mercury | बुध[1] | १०० |
| Poland | पोलकदेश | ११८ |
| Pole | पोलक | ११८ |
| Valentine | भालन्तन | १२४ |
| Switzer | सुविशदेश्य | १२६ |
| Rosemary | प्रणयौषधि[1] | १३० |
| Pansy | उत्कण्ठाकुसुमौषधि[1] | १३० |
| Fennel | चाटुवादकुसुमौषधि[1] | १३० |
| Columbine | अविश्वासौषधि[1] | १३० |
| Rue | विषादौषधि[1] | १३० |
| Daisy | विप्रलम्भकुसुम[1] | १३० |
| Violet | विश्वासकुसुम[1] | १३० |
| Robin | रवीन्द्र | १३० |
| Claudio | क्लेद्य | १३७ |
| Normandy | नर्मण्यप्रदेश | १३९ |
| French | प्रांशुदेशीय | १३९ |
| Norman | नर्मण्यदेशीय | १३९ |
| Lamond | लोमन्द | १३९ |
| Crow-flower | कन्यापुष्प[1] | १४३ |
| Nettle | मर्मरुजापुष्प[1] | १४३ |
| Daisy | विशुद्धललनापुष्प[1] | १४३ |
| Long purple | मृत्युप्रहारपुष्प[1] | १४३ |
| Adam | आदम | १४७ |
| Yaughan | यौवन | १४८ |
| Cain | काण | १४९ |

१. एतच्चिह्निताः सर्वेऽर्थानुवादा बोध्याः ।

१. एतच्चिह्निताः सर्वेऽर्थानुवादा बोध्याः ।




# शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ११ | किं कथम् । | कथम् । किं |
| २ | २४ | द्योतन्नभोमण्डलं | प्रद्योतमानाम्बरं |
| ७ | १९ | चिरम्भावी | चिरभावी |
| ८ | २५ | वृद्धय | वृद्धाय |
| १२ | २१ | कृतवान् | कुर्य्यात् |
| १६ | १२ | भूतार्थः एव | भूतार्थ[1] एव |
| २४ | ७ | द्वादशघण्टा न वादिता | द्वादश घण्टा न वादिताः |
| २४ | ८ | वादिता | वादिताः |
| २४ | ९ | सा मया न श्रुता | ता मया न श्रुताः |
| २४ | १७ | घुप्यते | घुष्यते |
| २५ | ५ | देवाः | देव |
| २६ | २८ | क्राउत्च्यममामन्ति | उत्क्रामन्ति ममाद्य |
| २९ | १३ | पृथ | पृथु |
| ३० | २ | वद्धिं, मित्यं | बुद्धि, मियं |
| ३० | १६ | रम्यसिञ्चत् | रम्यषिञ्चत् |
| ३० | १९ | श्वत्रिण | श्वित्रिण |
| ३५ | १५ | शन्तं | शान्तं |
| ३७ | ५ | पत्रञ्च च | पत्रञ्च |
| ३७ | ६ | उपहारिष्ये | उपहरिष्ये |
| ३८ | १३ | दस्न्त | दन्त— |
| ३९ | २५ | णाज्ञत्वञ्च | णाज्ञानाञ्च |
| ४५ | १३ | भ्रातृव्ये | भ्रातृजे |
| ४८ | २५ | मब्रुव | मब्रव |
| ५२ | ४ | नु कथं | कथं नु |
| ५४ | ५ | प्युषरो | प्यूषरो |
| ५४ | १३,१५ | तदीयं | त्वदीयं |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५४ | १५ | मक्रवं | मन्त्रवं |
| ५६ | २५ | 'कृष्ट'स्य | कृष्टाख्यस्य |
| ५७ | २७ | तदाख्यो | तदाख्यः |
| ६१ | २४ | ञ्ज्योतींषि | ज्ज्योतींषि |
| ६३ | २४ | भिद्या | भिन्द्या |
| ६७ | २०,२१ | श्रीः तस्या | श्रीस्तस्या |
| ६८ | ६ | निगह्याम: | निगूह्याम: |
| ६८ | १६ | मथवासत्व | मथवासत्त्व |
| ६९ | २२ | दर्पोद्घातात् | दर्पोद्धतात् |
| ७० | २५ | अस्त्रि | अस्ति |
| ७३ | ३ | चर्य्यपिमानं | चर्य्योपमानं |
| ७३ | १६ | दृष्ठ | दृष्ट |
| ७८ | ३ | वेण | वेणु |
| ८० | ८ | आशास्मे | आशंसे |
| ८२ | ८ | स्वल्पाश्चेत् | स्वल्पाच्चेत् |
| ८३ | २३ | भष्यिष्ठै | भूयिष्ठै |
| ८४ | १६ | भिद्यात् | भिन्द्यात् |
| ८६ | २ | बलितं | बलितान् |
| ८६ | २३ | त्याशास्मे | त्याशंसे |
| ८९ | २३ | शब्दयितुं | शब्दापयितुं |
| ९० | २३ | मतार | मातर |
| ९२ | १० | विविध | विघ |
| ९२ | १७ | मती | महती |
| ९४ | १३ | भयात् | भूयात् |
| १०० | २५ | नरोत्तम | नरोत्तमं |
| १०२ | १४ | व्यासङ्ग | व्यासङ्गं |
| १०५ | २५ | जीवं | जीव |
| ११८ | १७ | भ्रातृन्जः | भ्रातृजः |
| १२३ | ९ | विद्यां | विद्या |
| १३२ | ६ | निष्क्रान्तो | निष्क्रान्ताः |
| १३४ | ८ | तस्य पुरो नयिष्यसि | नेष्यसि तस्य संमुखं |





| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३५ | १६ | स्ततोऽतु | स्ततोऽस्तु |
| १३५ | २२ | द्रास | द्रस |
| १३६ | ९ | मापि | मपि |
| १३७ | ८ | कथन्म | कथं म |
| १३९ | ८ | वबलितानि | बलितानि |
| १३९ | १० | भयिष्ठ | भूयिष्ठ |
| १४१ | १५ | वर | वैर |
| १४३ | ६ | कार्य्यार्थिं | कार्य्यार्थं |
| १४६ | ११ | निर्णभ्यो | निर्णयो |
| १४८ | २४ | शय | शप |
| १५१ | २६ | विशीर्य्येत् | विशीर्य्येत |
| १५२ | १० | मभ्यसिञ्चत् | मभ्यषिञ्चत् |
| १६३ | १ | वीर्य्यं — | वीर्य्यं — |
| १६६ | ६ | टिट्भो | टिट्टिभो |
| १७० | ३ | गोतासाश्च | गोलासाश्च |
| १७४ | ११ | सवश्च | स च |
| १७५ | ११ | मिमान् | निमान् |
| १७६ | १ | परुपं | परुषं |
| १७७ | १ | मूर्द्ध्न | मूर्द्ध्नि |
| १७७ | ६ | द्वतीय | द्वितीयं |

## SANSKRIT POETRY, DRAMA ETC.
(in English)

| | Rs. |
|---|---|
| Abhijnana Sakuntalam : Devadhar | 5.50 |
| ,, : M.R. Kale | 12.00 |
| Avimaraka (Love's Enchanted World) : Masson & Kosambi | 18.00 |
| Bhattikavya—A Study : S.P. Narang | 15.00 |
| Dasakumaracarita : M. R. Kale | 15.00 |
| Dasarupaka of Dhananjaya : G.C.O. Haas | 7.50 |
| Harsacarita : P. V. Kane | 12.00 |
| Harsacarita : Cowell & Thomas | 12.00 |
| Hitopadesa : M. R. Kale | 6.00 |
| Jatakamala : R. C. Dwivedi | 8.00 |
| Kadambari(Purvardha) : M.R. Kale | 25.00 |
| Kansavaho : A. N. Upadhye | 4.50 |
| Karpuramanjari : Konow & Lanman | 7.50 |
| Kathasaritasagar or Ocean of Streams of Story : Tawney & Penzer | 90.00 |
| Kavyalankara of Bhamaha : P.V. Naganatha | 12.00 |
| Kavyaprakasha or Poetic Light : R. C. Dwivedi | 40.00 |
| Kiratarjuniyam : M. R. Kale | 5.00 |
| Malatimadhava : M. R. Kale | 12.00 |
| Malavikagnimitra : C.R. Devadhar | 4.50 |
| Meghaduta : M. R. Kale | 4.50 |
| Mudrarakshasa : M. R. Kale | 10.00 |
| Niti & Vairagya Satakas : M.R. Kale | 6.00 |
| Panchatantra : M. R. Kale | 8.00 |
| Pratijnayaugandharayana : S. K. Sharma | 5.00 |
| Principles of Literary Criticism in Sanskrit : R. C. Dwivedi | 35.00 |
| Ritusamhara : M. R. Kale | 3.50 |
| Sahityadarpana : Ballantyne & Mitra | 15.00 |
| Sahityadarpana : P. V. Kane | 10.00 |
| Songs of Vidyapati : S. Jha | 10.00 |
| Two Plays of Ancient India : (Mrichhakatika & Mudrarakshasa) : J. A. B. Van Buitenen | 20.00 |
| Vasavadatta : L. H. Gray | 7.50 |
| Vikramorvasiyam : M. R. Kale | 8.00 |
| ,, : C.R. Devadhar | 4.50 |
| Works of Kalidasa (Dramas) : C. R. Devadhar | 16.00 |

MOTILAL BANARSIDASS

DELHI :: PATNA :: VARANASI

## THE RAGHUVAMŚA OF KĀLI

Edited with a literal English translation,
notes in English intermixed with full extracts,
the text, from the commentaries of Bhaṭ
Chāritravardhana, Vallabha, Dinakaramiśr
vijaya, Vijayagaṇi, Vijayānandasūri's Varach
and Dharmameru, with various readings &c.

*by*

**Gopal Raghunath Nandargikar**

*Demy octavo* : *pp* 1224 : *Price Rs.* 45.00

In the domain of classical poetry, so far none has excelled Kālidāsa in the natural presentation of an old theme and the artistic decoration of its form. Of the three Kāvyas of Kālidāsa —Meghadūta, Kumārasambhava and Raghuvaṁśa—none has better displayed the peculiar charm of Kālidāsa's poetry than the present Kāvya.

The text is constituted from Mss. and other printed editions. It incorporates authentic readings with occasional variants noted in the footnotes. The English translation, though literal, imbibes the spirit of the original. The introduction discusses the date etc. of the author and enlightens on the commentators' contribution to the interpretation of the text. The triad of index at the end arranges in order the proper names in the text, names of authors and works quoted and anonymous quotations in Mallinātha's commentary.

The edition is unique in composition. Herein, the reader will find the most essential material, well planned and well presented, on the art of Kālidāsa's poetry.

MOTILAL BANARSIDASS
DELHI :: VARANASI :: PATNA